**नभावयेत्कथंभावयेदिति । तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति । साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति । इति-**

**to the questions : ) what should be effected, by what means should it be effected, and how should it be effected. As regards the expectancy for the objective, heaven and other fruits are to be construed as the objective. As regards the expectancy for the means, sacrifice etc is to be construed as the means . As regards the expectancy for the procedure,**

---

दीनां भावनांशानां त्रयाणां मध्य इत्यर्थः । तस्यां च भावनायां स्वर्गादिफलमेव पुरुषविशेषणमपि साध्यत्वेनान्वेतीति पुरुषार्थत्वान्न तु धात्वर्थः समानपदोपात्तोऽप्यपुरुषार्थत्वात्तत्त्वेनान्वयं लभत इत्याह **स्वर्गादिफलमिति** । किंच तस्यां पुनः फलभावनायां प्रत्ययवाच्यभूतायामेकपदोपात्त-प्रकृत्यर्थ एव करणत्वेनान्वेतीति संनिकृष्टत्वात्, न तु पदान्तरोपात्तं द्रव्यादि विप्रकृष्टत्वात् । नच साध्यरूपस्य प्रकृत्यर्थस्य कथं फलसाधनत्वमिति वाच्यम्, द्रव्यादिस्वसाधननिष्पादितस्य साध्यस्यापि प्रकृत्यर्थस्य फलं साधयितुं शक्यत्वादित्युक्तमेवत्याशयेनाह—**यागादिः करणत्वेनान्वेतीति** । किंच कुठारेण छिनत्तीत्यादौ कथमिति कथंभावाकाङ्क्षायामुद्यम्य निपात्येत्युद्यमननिपतनादेरितिकर्तव्यतात्वेनान्वयवद्यागेन स्वर्गं भावयेदित्यत्रापि कथमिति कथंभावाकाङ्क्षायामग्न्यन्वाधानप्रयाजावघातादिभिरुपकारं संपाद्येति प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वयं भजत इत्याशयेनाह—**इतिकर्तव्यताकाङ्क्षायामित्यादिना** । कथंभावाकाङ्क्षापूरकत्वमितिकर्तव्यतात्वम् । निरुक्तो वेतिकर्तव्यताशब्दार्थो बोध्यः । भवति च प्रयाजादिषु लक्षणसमन्वयो यागेन स्वर्गं कुर्यादिति । ततः कथमिति कथंभावाकाङ्क्षायां प्रयाजादिभिरुपकारं संपाद्येति कथंभावाकाङ्क्षापूरणात्, कर्तव्यसामान्यस्य यागादिरूपस्य भेदकविशेषरूपत्वाच्च । तच्च प्रकरण प्रमाणनिरूपणावसरे प्रदर्शयिष्यामः । तथाच ' यजेत स्वर्गकाम ' इत्यत्राग्न्यन्वाधानावघात-प्रयाजादिभिरुपकारं संपाद्य यागेन स्वर्गं भावयेत् । स्वर्गं कुर्यादिति वाक्यार्थः । यथौदनकामः पचेदित्यत्र लिङा भावनाभिधीयते, तत्र च किं भावयेत्कथं भावयेदिति भाव्याद्याकाङ्क्षायां तृणफूत्कारादिभिरुपकारं संपाद्य पाकेन तेजःसंयोगलक्षणेनौदनं भावयेदोदनं कुर्यादिति भाव्याद्यन्वयेन वाक्यार्थः संपद्यते तद्वदिति ।

**ननु** पूर्वं साध्यस्यापि यागादेः स्वसाधननिष्पादितस्य सतोऽपूर्वनिष्पादकत्वं संभवति तद्द्वारेण च विनश्वरस्याप्यचिरं स्वर्गसाधनत्वमितरस्य संभवतीत्युक्तम् । तच्च यागेन कथमुत्पाद्यते तत्र वक्तव्य—यागेन स्वर्गं कुर्यादिति तावत्फलवाक्येन यागस्य फलसाधनत्वं बोध्यते । **तत्र च कथं विनश्वरेण स्वर्गः कर्तव्यस्तस्य कालान्तरभावित्वादित्याकाङ्क्षायामपूर्वं निष्पाद्येत्युच्यते । पुनः कथमपूर्वं निष्पादनीयमित्याकाङ्क्षायां प्राच्योदीच्याङ्गविशिष्टस्य यागस्यानुष्ठानप्रकारेणेत्युच्यते ।**

-कर्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेति ।

( ६ )

अथ को वेद इति चेदुच्यते । अपौरुषेयं वाक्यं वेदः ।

the several constituents (of the sacrifice) like the PRAYĀ-
-JAS are to be construed as the procedure.

(6)

If it be asked, "What is the Veda ?", we reply "Veda

---

तच्चापूर्वं दर्शपूर्णमासयोरनेकविधं—फलापूर्वं समुदायापूर्वमुत्पत्त्य-पूर्वमङ्गापूर्वं चेति । तत्र येन स्वर्गः क्रियते तत्फलापूर्वमित्युच्यते फलजनकत्वात्, तच्च समुदायापूर्वेण जन्यते । समुदायश्च द्विविधः—अमावास्यायां त्रयाणां यागानामेकः समुदायः, पौर्णमास्यां च त्रयाणां यागानामपरः समुदायश्च, ताभ्यां जन्यं यदपूर्वं तत्समुदायापूर्व-मित्युच्यते । समुदाययोश्च भिन्नकालवर्तिनोः सहत्य फलापूर्वजननायोगात्तज्जननाय समुदाय द्वयजन्यस्यापूर्वद्वयस्यावश्य कल्पनीयत्वात् । अमावास्यायां समुदायस्तु 'ऐन्द्रं दध्यमावास्या यामैन्द्रं पयोऽमावास्यायां' मिति वाक्यविहितो सांनाय्ययागो 'यदाग्नेयोऽष्टाकपाल' इति वाक्यविहित आग्नेयश्च तेषां त्रयाणां भवति । पौर्णमास्यां समुदायस्तु—'यदाग्नेयोऽष्टा-कपालोऽमावास्यायां च पूर्णमास्यां चाच्युतो भवती' त्याग्नेययागो विहितः, 'ताभ्यामेत मग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छ' दित्यग्नीषोमीययागो विहितः । 'उपांशुयाज मन्तरा यजती' त्युपांशुयागः 'तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्या'मिति वाक्येन विहितः । तेषां त्रयाणां च भवति । तयोस्तु समुदाययोर्मध्य एकसमुदायवर्तिनां त्रयाणां यागानां भिन्नक्षणवर्तिनां सहत्य समुदायद्वयजन्ययोरपूर्वयोरेकापूर्वजननायोगात्तज्जननाय यागत्रयज-न्यानि त्रीण्युत्पत्त्यपूर्वाणि कल्पनीयानि । तेषां चाङ्गोपकारमन्तरेणानुत्पत्तेरङ्गानां चानेकक्षणवर्तित्वेन सहत्योत्पत्त्यपूर्वारम्भायोगात्तदारम्भायाङ्गापूर्वाणि सन्निपत्योपकार कादीनि कल्पनीयानि ।

तस्य च वेदरूपप्रमाणस्य प्रमेयोऽर्थस्त्रिविध इति प्रसङ्गाच्चिन्त्यते—क्रत्वर्थं पुरुषार्थ उभ यार्थश्चेति । तत्र प्रयाजादि प्रोक्षणादिश्च केवलं क्रत्वर्थं । फलं यागादिरूपं तत्करणं च पुरुषार्थं यथा स्वर्गादिर्दर्शपूर्णमासादिश्च । दध्यादि तूभयार्थं 'दध्ना जुहोती'ति फलासंयुक्तवाक्येन तस्य क्रत्वर्थत्वावगमात् 'दध्नेन्द्रियकामस्य जुहुया' दिति फलसंयोगपरवाक्येन पुरुषार्थत्वावगमाच्च । एकस्य तूभयार्थत्वे विनियोजकप्रमाणभेदस्य नियामकत्वात् ।

तदेवं सामान्यतः प्रयोजनवदर्थावबोधकत्वेन वेदस्य धर्मे प्रामाण्यं धर्मविधायकत्वप्रदर्शनेन चोपपाद्येदानीं तस्य विध्यादिरूपविभागेन तत्र प्रामाण्यमुपपादयितुं तल्लक्षणं पृच्छति—अथेति । उत्तरं प्रतिजानीते—उच्यत इति । तत्र सामान्यलक्षणमाह—अपौरुषेयं वाक्यमिति । वेद इति लक्ष्यनिर्देशः । तत्र भारतादावतिव्याप्तिवारणायापौरुषेयमिति विशेष

४ सच विधि–मन्त्र–नामधेय–निषेध–अर्थवाद–भेदात्पञ्चविधः ।

५ H तत्राज्ञातार्थज्ञापको वेदभागो विधिः । सच तादृशप्रयोजनवदर्थविधानेनार्थवान् यादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते–यथा 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इति विधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते । अग्निहोत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः । यत्र कर्म

consists of sentences that have not originated from a person' It is again fivefold, being either Injunction (VIDHI), or Incantation ( MANTRA ), or Designation (NAMADHEYA) or Prohibition (NISHEDHA), or Missionary Assertion (ARTHAVADA) Of these Injunction is that portion of the Veda which conveys a matter not (known by other means of proof) It enjoins such a matter as is not established by any other means of proof, and by enjoining such a matter it becomes useful To illustrate the Injunction One aspiring to heaven should offer AGNIHOTRA,' enjoins a sacrifice with heaven as the goal, which is not established by any

---

णम् । आत्मादौ तद्दोषवारणाय वाक्यमिति विशेष्यम् । **प्रमाणान्तरेणार्थमुपलभ्य विनिर्मितस्य पौरुषेयत्व तद्भिन्नवाक्यत्वमिति फलितम्** । ईश्वरो वेदमपि प्रमाणान्तरेणार्थमुपलभ्य विरचयति । तस्मात्कथं वेदस्य पौरुषेयाद्भिन्नत्वम् ? । **नहि वेदं परमेश्वरस्तदर्थं प्रमाणान्तरेणोपलभ्य विरचयति । वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वाद्वर्तमानवेदाध्ययनवदित्यनुमानेन वेदस्यापौरुषेयत्वसाधनात्** । 'य यस्य स कल्पपूर्वक' इति न्यायेन संसारस्यानादित्वात्—परमेश्वरस्य च सर्वज्ञत्वात्परमेश्वरो गतकल्पीय वेदमस्मिन्कल्पे स्मृत्वोपदिशतीत्येताव मात्रेणोपपत्तौ वेदपौरुषेयत्वस्यानौचित्याच्चेति भाव । वेद विभजते–**सचेत्यादिना** ।

तत्र विधि लक्षयति—**तत्रेत्यादिना** । तत्र पञ्चविधेषु वेदभागेषु मध्य इत्यर्थ । **अज्ञातेति** । अज्ञातस्य प्रयोजनवतोऽर्थस्य यागादिनामकस्य ज्ञापकत्व विधित्वमित्यर्थ । तदेवाह—**सचेत्यादिना** । ■ विधिर्यादृश प्रमाणान्तरेणाप्राप्त भवति तादृशमर्थं विधत्ते, तेन चाज्ञातप्रयोजनवदर्थविधानेनार्थवानिति योजना । तत्रोदाहरणमाह–**यथाग्निहोत्रमिति** । गुणविधिस्तु मानान्तरेणाप्राप्त गुणमात्र विधत्ते । प्रधानकर्मणस्तु मानान्तरेण प्राप्तस्यानुवाद एवेत्याह—**यत्र कर्मेत्यादिना** । **उभयमिति** । शेषशेषिलक्षणमुभयमित्यर्थ ।

---

१ ४ । तत्राज्ञातज्ञापक ।

मानान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते—यथा 'दध्ना जुहोती' त्यत्र होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानं दध्ना होमं भावयेदिति ।

यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते—यथा 'सोमेन यजेते'त्यत्र सोमयागयोरप्राप्तत्वात्सोमविशिष्टयागविधानम् । सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति वाक्यार्थबोधः । नचोभयविधाने वाक्यभेदः, प्रत्येकमुभयस्याविधानात्, किंतु विशिष्टस्यैव विधानात् ।

other means of proof besides The sense to be understood from the sentence is " Heaven should be realised by means of the Agni hotra sacrifice' In cases where the (sacrificial) action is established on a separate authority, (the Injunction) enjoins only a subservient thing with regard to it (i e the sacrificial action) To illustrate In the Injunction, ' One should sacrifice with curds, only curds is enjoined with regard to the sacrifice the sense being 'The sacrifice should be created with curds,' because, the sacrifice is (already) established by (the injunction) One should offer AGNIHOTRA"

In cases where neither of the two is established, the Injunction lays down a qualified thing To illustrate In the injunction, "One should sacrifice with Soma," neither Soma nor the sacrifice is established, and hence there is enjoined therein *a sacrifice qualified by Soma* (as its material) By interpreting the word Soma ' by Indication (LAKSHANĀ), as ' one characterised by Soma", the sense conveyed by the sentence is that the desired object should be realised by a sacrifice with Soma There results no Diversity of Statements (VĀKYABHEDA), if both are enjoined, for *both* are not individually (PRATYEKAM) enjoined but *one* only as qualified (by the other)

---

विशिष्टमिति । शेषविशिष्टं शेषिणमित्यर्थः । तत्रोदाहरणमाह—यथा सोमेन यजेतेति । ननु सोमरूपस्यैव यागस्यात्र विधिरस्तु किं विशिष्टविधानेनेत्याशङ्कय सोमस्य द्रव्यत्वेन यागत्वासंभवात्सोमपदे मत्वर्थलक्षणास्वीकारेण विशिष्टस्यैव विधेयत्वं स्वाभिप्रेतमित्याह—सोमपद इत्यादिना ।

ननु शेषशेषिलक्षणस्योभयपदार्थस्य विधाने वाक्यभेदः स्यादेव । नच स इष्ट इति वाच्यम् । यत्र वाक्यभेदस्तत्राष्टदोषप्रसङ्गात् । तथाहि ' व्रीहिभिर्यजेत यवैर्वे'त्यत्र ।

३ ।

नच 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति (आपस्तम्ब श्रौ. सू. १०-२-१) विधिप्राप्तयागोद्देशेन सोमरूपगुणविधानमेवास्तु, सोमेन यागं भावयेदिति, किं मत्वर्थलक्षणयेति वाच्यम् । तस्याधिकारविधित्वेनोत्पत्तिविधित्वासंभवात् ।

It should not be urged, "Let it be an injunction of the subservient thing only, viz Soma,–that the sacrifice should be realised with Soma–with regard to the sacrifice which is (already) established by the injunction, 'One aspiring to heaven should offer the JYOTISHTOMA sacrifice' Where is the use of the Indication of Possession, (MATWARTHA-LAKSHANĀ) (then)?" For, being an Injunction of Competence (ADHIKĀRA), it cannot possibly be an Injunction of Origination (UTPATTI).

---

तत्र च प्रथमप्रयोगे व्रीह्यनुष्ठाने यवशास्त्रप्रामाण्यस्य स्वार्थानुष्ठापकत्वरूपस्य परित्यागः । स्वार्थाननुष्ठापकत्वरूपस्याप्रामाण्यस्य च स्वीकारो भवति । ततो द्वितीयप्रयोगे यवानुष्ठाने तु पूर्वं परित्यक्तस्य यवशास्त्रप्रामाण्यस्य स्वीकारः स्वीकृतस्य च तदप्रामाण्यस्य परित्यागश्चेति यवशास्त्रे चत्वारो दोषा भवन्ति । तथा प्रथमप्रयोगे यवानुष्ठाने व्रीहिशास्त्रप्रामाण्यस्य स्वार्थानुष्ठापकत्वलक्षणस्य परित्यागः । स्वार्थाननुष्ठापकत्वरूपस्य चाप्रामाण्यस्य स्वीकारः । ततो द्वितीयप्रयोगे व्रीह्यनुष्ठाने तु व्रीहिशास्त्रप्रामाण्यस्य पूर्वं परित्यक्तस्य स्वीकार स्वीकृतस्य च तदप्रामाण्यस्य परित्यागश्चेति व्रीहिशास्त्रे चत्वारो दोषा भवन्तीत्यष्टदोषदुष्टो विकल्पो यथा व्रीहियवशास्त्रे प्रसिद्धस्तथात्रापि स्यात् ।

प्रकृते गुणविधिमात्रस्वीकारेणाप्युपपत्तौ न सोमपदे विलक्षणोभयविधि साधुरित्याशङ्कां परिहरति—नचेत्यादिना । यद्वा ननु यागेनेष्टं भावयेत्सोमेन च यागं भावयेदित्यावृत्यो-भयान्वयानुवृत्तिलक्षणो वाक्यभेदः स्यात् । यदा तु गुणपरत्वेन यागेनेष्टं भावयेत्सोमेन यागं [illegible] ...येत्यादिना ।

[illegible] तथाशास्त्रीका-

[illegible] तद्विधायकस्य

[illegible] सोमस्याविशेषे

व्यापारभेदेन तद्विधान तत्र न वाक्यभेदप्रसङ्ग इति परिहरति—विशिष्टस्येति । विशिष्टविधौ [illegible] श्रूयमाणविधिना गुणस्य पृथगविधानादिति भाव ।

ननु 'सोमेन यजेते'त्यस्य गुणविधित्वमेवास्तु सोमयागस्वरूपविधिस्तु 'ज्योतिष्टोमेन स्वर्गकामो यजेते' त्यनेन भवतु । तस्य ज्योतिष्टोमेनेत्यादिना प्राप्ते कर्मणि गुणविधायकत्वेनापि [illegible] मत्वर्थलक्षणा परदोषस्य [illegible] —नच ज्योतिष्टोमेनेत्यादिना । तत्र [illegible] हेतुमाह–तस्याधिकारविधित्वेनेति । नहि [illegible] उत्पत्तिवि-

ननु 'उद्भिदा यजेत पशुकाम' (ताण्ड्यमहाब्राह्मण १९-७-२) इत्यस्येव ज्योतिष्टोमेनेत्यस्याप्युत्पत्त्यधिकारविधित्वमस्त्विति चेत्। न।

दृष्टान्ते उत्पत्तिवाक्यान्तराभावेनान्यथानुपपत्त्या तथात्वाश्रयणात्। किंच ज्योतिष्टोमेनेत्यस्योभयविधित्वेऽनेनैव यागस्तस्य फलसंबन्धोऽपि

If it were urged, "Let 'JYOTISHṬOMENA etc.' be also regarded as an Injunction *both* of Origination and Competence, like (the injunction), "One desirous of cattle should offer the Udbhid sacrifice," we demur.

In the instance for illustration, the injunction has been admitted to be of that (two-fold) description for want of an alternative (ANYATHĀNUPAPATTYĀ), as there is no separate injunction of origination Moreover, if JYOTISHṬOMENA etc. were admitted as a Double Injunction, there will result a glaring Diversity of Statements, owing to

---

धित्वासंभवादिति। कर्मस्वरूपमात्रबोधकस्यैव विधेरुत्पत्तिविधित्वं व्यवह्रियते, उत्पत्तिविधिविहितस्य च कर्मणः फलविशेषेण सह संबन्धमात्रमधिकारविधिः करोति। यथा 'आग्नेयोऽष्टाकपालो भवती' त्येतदुत्पत्तिविधिविहितस्य कर्मण स्वर्गरूपफलविशेषेण संबन्धो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन विधिना क्रियत इति तस्याधिकारविधित्वमेव नोत्पत्तिविधित्वम्। तद्वदत्राप्यधिकारविधेर्नोत्पत्तिविधित्वं संभवतीति भावः।

ननु 'उद्भिदा यजेत पशुकाम' इत्यस्य विधिवाक्यस्य यथोद्भिन्नामकर्मरूपबोधकत्वरूपोत्पत्तिविधित्वेऽपि तस्य कर्मण पशुरूपफलसंबन्धबोधकत्वरूपाधिकारविधित्वमपि भवति तद्वदस्याप्युभयविधित्वमविरुद्धमित्याशङ्कते--नन्वित्यादिना। दृष्टान्ते तु कर्मस्वरूपबोधकोत्पत्तिवाक्यान्तराभावेनास्य वाक्यस्योभयविधित्वमाश्रितम्। कर्मण स्वरूपबोधनमन्तरेण तस्य फलसंबन्धबोधनानुपपत्त्या तस्यैव वाक्यस्योभयविधित्वाश्रयणादिति परिहरति--दृष्टान्त इत्यादिना। ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यस्य वाक्यस्योभयविधित्वस्वीकारे सोमेन यजेते'त्यस्य मत्वर्थलक्षणामन्तरेणैव गुणमात्रविधायकत्वनिर्वाहे को दोषोऽन्यथा मत्वर्थलक्षणाप्रसङ्गादित्याशङ्क्य परिहरति—किंचेत्यादिना। उभयविधित्व इति। सोमयागस्योत्पत्तिविधित्वेऽधिकारविधित्वे चेत्यर्थः। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनेनैव

बोधनीय इति सुदृढो वाक्यभेदः । तद्वरं सोमपदे मत्वर्थलक्षणया विशिष्टविधानम् ।

विधिश्चतुर्विधः उत्पत्तिविधि–र्विनियोगविधि–रधिकारविधिः–प्रयोगविधिश्चेति ।

(८)

तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । यथा 'अग्निहोत्रं

the same words having to convey the sacrifice, on the one hand, and *its connection with the fruit, on the other.* Therefore, it is better (to say) that this is a qualified injunction, by interpreting the word 'Soma' as indicative of possession.

There are four kinds of Injunction: Injunction of Origination, Injunction of Subservience, Injunction of Competence, and Injunction of Performance.

(8)

Of them, the Injunction of Origination is what conveys only the nature of an action; To illustrate. 'One should

---

सोमयागस्वरूपं तस्य स्वर्गरूपफलसंबन्धश्च बोधनीय इत्यर्थः । सुदृढो वाक्यभेद इति । गौरवलक्षणो वाक्यभेदो दृढतरो भवेदित्यर्थः । तथा चोक्तम्—'श्रोतव्यापारनानात्वे शब्दानामतिगौरवम् । एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते' इति । ननु वाक्यभेदादल्पदोषत्वात् । लक्षणाया पददोषत्वाद्वाक्यभेदस्य तु वाक्यदोषत्वात्, पदवाक्यदोषयोर्मध्ये पददोषस्यैव कल्पनीयत्वात् 'गुणे त्वन्याय्यकल्पनेति' न्यायात् । तस्मात् 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यस्योभयविधित्वे वाक्यभेदप्रसङ्गाद्वरं सोमपदे मत्वर्थलक्षणां स्वीकृत्य गुणविशिष्टकर्मस्वरूपविधानमेवेत्याशयेनोपसंहरति—तद्वरमित्यादिना ।

विधिं विभजते—विधिश्चतुर्विध इति । तत्रोत्पत्तिविधिं लक्षयति—तत्रेत्यादिना । तत्र चतुर्णां विधीनां मध्य इत्यर्थः । कर्मस्वरूपमात्रेत्यत्र मात्रपदेनोत्पत्तिविधेः कर्मणः फलादिना सह संबन्धबोधकत्वं वारयति । 'उद्भिदा यजेत पशुकामः' इति विधेस्तु श्रौतमधिकारविधित्वमेव, उत्पत्तिविधित्वं तु कर्मस्वरूपबोधकविध्यन्तराभावेनार्थिकमेवेति न दोषः । तत्रो-

जुहोती'ति (मैत्रायणी सं. १-८-६)। अत्र च विधौ कर्मणः करणत्वेनान्वयः अग्निहोत्रहोमेनेष्टं भावयेदिति।

ननु यागस्य द्वे रूपे द्रव्यं देवता च। तथाच रूपाश्रवणेऽग्निहोत्रं जुहोतीति कथमुत्पत्तिविधिः। अग्निहोत्रशब्दस्य तु तत्प्रख्यन्यायेन नाम-

offer Agni-hotra' (is an injunction of this description). Further, in injunctions of this kind, the action is to be construed as the means, the sense of the injunction being 'one should realise the desired object by offering the Agni-hotra sacrifice.'

If it were argued, "A sacrifice has two aspects the *material (offered) and the divinity* And when neither of these aspects is accordingly mentioned, how can (the sentence) 'One should offer Agni-hotra,' be an Originative Injunction? As for the word 'Agni-hotra' it is a (mere) Designation, according to the TATPRAKHYA principle," we differ

दाहरणमाह—**यथाग्निहोत्रं जुहोतीति**। एतदुपलक्षणं 'सोमेन यजेत,' 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं,' 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती'त्यादीनाम्। तथाच तत्र द्वितीयाध्याये कर्मोत्पत्तिविधीनामेव भेदो निरूपितः। **ननु** चात्रोत्पत्तिविधौ कर्मणः साध्यत्वेनान्वयो भवतु 'अग्निहोत्रं होमं कुर्या'दिति, 'व्रीहीन्प्रोक्षती'तिव 'दग्निहोत्रं जुहोती'त्यत्रापि द्वितीयायाः साध्यत्ववाचकत्वात्। तथाच साध्यस्य साध्यत्वस्वभावादेव साध्यान्तरसाधनत्वासम्भवेन साध्यान्तरान्वयायोगादधिकारविध्यवगतफलसम्बन्धानुपपत्तिः स्यादित्याशङ्क्याह—**अत्रच विधावित्यादिना**। अग्निहोत्रहोमेनेष्टं भावयेदिति करणत्वेनान्वये [illegible] किं तदिष्टमिति वीक्षायाम् 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यधिकारविध्यवगतफलसम्बन्धोपपत्ते, स्वसाधननिष्पादितस्य सिद्धस्वभावस्यैव करणत्वेनान्वयाच्च न कोऽपि दोष इति भावः। **ननू**त्पत्तिविधाविष्टबोधकपदस्याभावादग्निहोत्रहोमेनेष्टं भावयेदिति कथं वाक्यार्थः स्यादिति चेन्न। विधेरेवेष्टाक्षेपकत्वात्। अन्यथा तस्यापुरुषार्थभूते कर्मणि पुरुषप्रवर्तकत्वानुपपत्तिः स्यात्।

**ननु** 'अग्निहोत्रं जुहोती'त्यस्य नोत्पत्तिविधित्वं द्रव्यदेवतात्मकस्य कर्मरूपस्याश्रवणादित्याशङ्कते—**नन्विति**। नन्वग्नये होत्रमनेनेत्यग्निहोत्रशब्देनाग्निदेवतात्मकस्य कर्मरूपस्य श्रवणात्कथं रूपाश्रवणमित्याशङ्क्याह—**अग्निहोत्रशब्दस्येति**। अग्निहोत्रशब्दस्य **'तत्प्रख्यं चान्यशास्त्र' मिति तत्प्रख्यन्यायेन** नामधेयत्वस्य वक्ष्यमाणत्वात् कस्यापि कर्मरूपस्य श्रवणमप्रत्येपे,' यद्यप्यत्र कर्मणो रूपं न श्रूयते तथापि विध्यन्यथानुपपत्त्या तत्कल्प्यते। तच्च सामान्यतः कल्प्यमानं द्रव्यदेवतात्मकं कर्मणो रूपं विशेषाकाङ्क्षया गुणविधिमन्त्रवर्णाभ्यां विशे-

तत्प्रख्या– देवताया वाचकत्वात्। (मी. जैमिनि [illegible])

तत्प्रख्यं तु अन्यशास्त्रम्।

धेयत्वादिति चेत् । न । रूपाश्रवणेऽप्यस्योत्पत्तिविधित्वात् । अन्यथा रूपश्रवणात् 'दध्ना जुहोती' त्ययमेवोत्पत्तिविधिः स्यात् । तथाच 'अग्निहोत्रं जुहोती'ति वाक्यमनर्थकं स्यात् ।

(९)

अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिः । यथा 'दध्ना

For, this is an Injunction of Origination, though it does not mention (either) aspect. Otherwise, "One should sacrifice with curds" will be an Injunction of Origination, as it lays down one aspect (i. e. material). And in that event, the sentence "One should offer Agni-hotra," will have no purpose to serve.

(9)

Injunction of Subservience is one that conveys the relation between the subservient and the principal e. g. "One should sacrifice with curds" For, that (injunction) enjoins the connection of curds, whose subservience is

---

धेण चावगम्यमानमत्र संभवति । ततश्चाग्निहोत्रं जुहोतीत्यत्र द्रव्यदेवतात्मकस्य कर्मरूपस्य श्रवणाभावेऽप्यस्य होमरूपकर्मस्वरूपमात्रबोधकत्वरूपमुत्पत्तिविधित्वं संभवतीत्याशयेन परिहरति—**नेति** । तत्र निरुक्तार्थे हेतुमाह—**रूपाश्रवण इति** । विपक्षे बाधकमाह—**अन्यथेति** । अग्निहोत्रं जुहोतीत्यस्य रूपाश्रवणमात्रेणोत्पत्तिविधित्वानङ्गीकारे दध्ना जुहोतीत्यस्यैवोत्पत्तिविधित्वं स्यादत्र कर्मस्वरूपस्य श्रवणादित्यर्थः । दध्ना जुहोतीत्यस्याग्निहोत्रकर्मोत्पत्तिविधित्वे वाक्यान्तरस्यानर्थक्यमनिष्टमापादयति—**तथा चेति** । न चाग्निरूपगुणविधित्वेनास्योपपत्तिरिति वाच्यम् । 'अग्निर्ज्योति' रित्यादिमन्त्रवर्णेनाग्निरूपगुणस्य प्राप्तत्वात्, कर्मनामधेयत्वस्य वक्ष्यमाणत्वाच्च । तस्मादनर्थकमिति साधूक्तम् । किंच 'दध्ना जुहोती' त्यस्योत्पत्तिविधित्वे 'पयसा जुहोती' त्यस्यापि वैयर्थ्यं कर्मान्तरविधायकत्वं वा स्याद्धोमस्योत्पत्तिशिष्टदध्यवरुद्धत्वेन तत्र पयोरूपगुणविधानासंभवात् । तथाच नेकादृष्टकल्पनापत्तिः । 'अग्निहोत्रं जुहोती' त्यस्य होमोत्पत्तिविधित्वे तु 'दध्ना जुहोति,' 'पयसा जुहोती' त्यादिवाक्यस्य सर्वस्यापि तत्र **खलेकपोतन्यायेन** युगपद्दध्यादिगुणविधायकत्वेनाप्युपपत्त्या नानेकादृष्टकल्पनाप्रसङ्ग इत्यग्निहोत्रं जुहोतीत्यस्यैवोत्पत्तिविधित्वं न्याय्यमित्यलमतिविस्तरेण ।

तृतीयाध्यायस्यार्थभूतं शेषशेषिभावं निरूपयितुमिदानीं विनियोगविधिं लक्षयति—**अङ्गप्रधानेति** । अङ्गानां द्रव्यदेवतादिरूपाणां प्रधानैर्यागान्तरविहितैः सह संबन्धस्य शेषत्वलक्षणस्य बोधको विधिरित्यर्थः । तत्रोदाहरणमाह—**यथा दध्नेति** । 'दध्ना जुहोती'ति

By being instrumental it becomes a subordinate

जुहोती'(१)ति । स हि तृतीयया प्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते दध्ना होमं भावयेदिति ।

**realised through (its) instrumental, with the sacrifice, the sense being "One should perform the sacrifice with curds"**

---

'पयसा जुहोती' त्यादेरुपलक्षणार्थम् । स हि विधिस्तृतीयया प्रतिपन्नाङ्गभावस्य दध्यादेरग्निहोत्रं जुहोतीति विहितहोमसम्बन्धं विधत्त इत्याह—**स हीत्यादिना** । ननु दध्ना होमं भावयेद्धोमेनेष्टं भावयेदिति साध्यत्वेन करणत्वेन च होमस्यान्वयः स्यात् । तथाच **विरुद्धत्रिकद्वयप्रसङ्गः** । तथाहि दध्ना जुहोतीत्यत्र सकृदुच्चरितस्य जुहोतीत्याख्यातस्य दधिरूपे गुणे किंचिदिष्टे च तन्त्रेण सम्बन्धाङ्गीकारे सत्युपादेयत्व, विधेयत्व, गुणत्व, चेत्येकं त्रिकम्, उद्देश्यत्व, अनुवाद्यत्व, प्राधान्य, चेत्यपरं त्रिकं होमे सम्पद्यते । कथम् । शृणु—फलमुद्दिश्य होम उपादीयते, फलमनूद्य होमो विधीयते, फलं प्रधानं होम उपसर्जनम् । एवं होममुद्दिश्य दध्युपादीयते, होममनूद्य दधि विधीयते, होमः प्रधानं दध्युपसर्जनम् । ततश्च होमे फलापेक्षयोपादेयत्वं विधेयत्वं गुणत्वं दधिरूपगुणापेक्षया चोद्देश्यत्वमनुवाद्यत्वं प्राधान्यं च सम्पद्यते । नचात्र न तन्त्रेण सम्बन्धः किंतु पृथग्घोमावृत्त्या सम्बन्धो भवतीति वाच्यम् । वाक्यभेदप्रसङ्गात्, 'दध्ना होमं भावयेत्, होमेनेष्टं भावये'दिति वाक्यद्वयप्राप्तेः । तस्मात् दधिशब्दो गुणपर इति चेन्न । भ्रान्तिमत्त्वात्, तथाहि **यत्र हि साध्यत्वेन करणत्वेन चैकस्य युगपत्तन्त्रेण सम्बन्ध आशङ्क्यते तत्रैव विरुद्धत्रिकद्वयस्य प्रसक्तिर्भवति ।** यथा 'वाजपेयेन स्वाराज्यकामो यजेते'त्यत्र । तत्र च वाजपेयशब्दस्य पेयद्रव्याभिधायित्वेन गुणविध्याशङ्कायां मत्वर्थलक्षणाप्रसङ्गादपि तन्त्रेण युगपत्स्वाराज्यफलवाजपेयगुणसम्बन्धो यागस्य पूर्वपक्षितः । तत्र विरुद्धत्रिकद्वयप्रसङ्गापादनेन यथोक्तद्रव्यनिमित्तं वाजपेयशब्दस्य नामधेयत्वं राद्धान्तितम् । विरुद्धत्रिकद्वयप्रसङ्गश्च फलमुद्दिश्य याग उपादीयते फलमनूद्य यागो विधीयते । फलं प्रधानं याग उपसर्जनम् । एवं यागमुद्दिश्य वाजपेय उपादीयते यागमनूद्य वाजपेयो विधीयते । यागः प्रधानं वाजपेय उपसर्जनम् । फलस्योद्देश्यत्वं च मानसापेक्षो विषयत्वाकारः । यागस्योपादेयत्वं त्वनुष्ठीयमानताकारः । तौ चोभौ मनःशरीरोपाधिकौ धर्मौ भवतः । अनुवाद्यत्वविधेयत्वे तु शब्दोपाधिकौ धर्मौ स्तः । अनुवाद्यत्वं नाम मानान्तरज्ञातस्यानुकथ्यमानत्वम् । विधेयत्वं चाज्ञातस्यानुष्ठेयत्वेन प्रतिपाद्यमानत्वम् । फलस्य प्राधान्यं नाम साध्यत्वेन, यागस्योपसर्जनत्वं च साधनत्वेन वाच्यम् । तथा यागस्योद्देश्यत्वं नाम मानान्तरसिद्धस्य विधेयान्वयितया निर्देश्यत्वम् यथायोक्तम् । नचैवं होमे विरुद्धत्रिकद्वयप्रसङ्गः । तस्य साध्यत्वेन साधनत्वेन चात्र विधौ युगपत्तन्त्रेणान्वयानङ्गीकारात्, किंतु साध्यत्वेनैव । तथाच होमस्योद्देश्यत्वमनुवाद्यत्वं प्रधानत्वमेव नतूपादेयत्वादिकम् । तस्मात् विरुद्धत्रिकद्वयापत्तिरित्याशयेनाह—**गुणविधौ चेति । धात्वर्थस्य साध्यत्वेनैवान्वय इति** । धात्वर्थस्य यागदानहोमादेः साध्यत्वेनैवेत्यनेन साधनत्वेनान्वयं वारयति । साधनत्वेनान्वयस्तु धात्वर्थस्योत्पत्तिविधावधिकारविधौ च भवति नतु गुणविधावित्यर्थः ।

गुणविधौ च धात्वर्थस्य साध्यत्वेनान्वयः। क्वचिदाश्रयत्वेनापि यथा 'दध्नेन्द्रियकामस्य जुहुया' (तै. ब्रा.२-१-५-६) दित्यत्र दधिकरणत्वेनेन्द्रियं भावयेत्। तच्च किंनिष्ठमित्याकाङ्क्षायां सन्निधिमाप्तहोम आश्रयत्वेनान्वेति।

(१०)

एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि:—श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि। एतत्सहकृतेनानेन विधि-

Further, in an Injunction of Subservience, the root-sense is to be construed as the thing to be effected In some cases, (it is to be construed) also as the abode To illustrate: In the injunction, "One should sacrifice with curds for the Yajamāna wishing to have strength of senses," (the sense that we get is that) one should realise strength of senses by using curds as the means And when there arises an expectancy as to where that (curds) is to abide, it is answered by construing as the abode the sacrifice that occurs in close juxtaposition.

(10)

There are six means of proof assisting an injunction of this kind· Statement, Import, Sentence, Topic, Position

---

**ननु** गुणविधौ धात्वर्थस्य साध्यत्वेनैवान्वये 'दध्नेन्द्रियकामस्य जुहुया'दित्यत्र दध्ना होमं भावयेदिन्द्रियकामस्येति वाक्यार्थः स्यात्। तथा चेन्द्रियस्य साध्यत्वेन नन्वये तस्याफलत्वप्रसङ्गः। न च नात्र गुणविधिः, गुणपदस्यानर्थक्यप्रसङ्गात्। होमस्योभयरूपेणान्वये तु पूर्वोक्तदोषापत्तिरित्याशङ्क्याह—**क्वचिदित्यादिना**। यद्वा गुणविधौ धात्वर्थस्य साध्यत्वेनैवान्वयो नान्यथा। यत्र तु तृतीयोपात्तं दध्यादिगुणकरणत्वं तस्य प्रत्ययार्थत्वेन दध्यादिगुणस्यापि प्रधानत्वात्फलभावनायां करणत्वेन विधीयते, तत्र तु धात्वर्थस्याश्रयत्वेनैवान्वय इत्याह—**क्वचिदित्यादिना**। क्वचिदिति यत्र दध्यादिगुणकरणत्वस्य फलभावनायां करणत्वेन विधानं तत्रेत्यर्थो नतु गुणविधावित्यर्थः। **तच्चेति**। तृतीययोपात्तं दधिकरणत्वं चेत्यर्थः। होमाश्रयदधिकरणत्वेनेन्द्रियं भावयेदिति वाक्यार्थः। तथा च करणस्य कर्तृव्यापारव्याप्यत्वनियमात् केवलदध्नः कर्तृव्यापारानाश्रितस्य करणत्वानुपपत्तेर्होमस्य च वाक्यान्तरप्राप्तत्वान्नयोर्विध्यनुपपत्ते।

**एतस्य विधेरिति**। लक्षितस्य विनियोगविधेरित्यर्थः। **एतत्सहकृतेनेति**। एतत्प्रमाणषट्कसहकृतेनेत्यर्थः। विनियोगविधिसहकारित्वं च तेषां विनियोगविधिकृतविनियोगे प्रमाणत्वाद्-

नाङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते।

(११)

तत्र निरपेक्षो रवः श्रुतिः। सा च त्रिविधा—विधात्री, अभिधात्री,

**and Appellation Assisted by either of these, this injunction conveys subservience viz. that a thing is accomplished by the action of one who is active in pursuit of something different which is the same as its (i. e of the thing) being intended for something else.**

**(11)**

***Of them, Statement is words (RAVA) that do not depend*** **(upon any intermediate steps) That again is three-fold: that which lays down, that which asserts, and that which enjoins subservience**

---

वतीति बोध्यम्। अनेन विधिनाङ्गत्वं ज्ञाप्यत इत्यन्वयः। अङ्गत्वं लक्षयति—**परोद्देशेत्यादिना।** परं स्वर्गादिरूपमुत्कृष्टं साध्यं फलं तदुद्देशेन सङ्कल्पनया मनसि सिद्धवत्करणेन तत्साधनयागादिषु प्रवृत्तस्य कृतिसाध्यत्वरूपं कृतिव्याप्यत्वरूपमित्यर्थः। तथा च स्वर्गफलोद्देशेन दर्शादिषु प्रवृत्तपुरुषकृतिव्याप्यत्वं प्रयाजानुयाजावघातप्रोक्षणादीनां सुप्रसिद्धमिति तेषां शेषत्वम्। **यद्वा** परशब्दो दर्शादिपरः। तथा च तदुद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वं प्रयाजादीनां भवतीति तेषां तत्त्वम्, दर्शादेस्तु प्रयाजाद्युद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वाभावान्न तत्रातिव्याप्तिः। केवलप्रयाजाद्युद्देशेन कस्यचिदपि पुरुषस्य प्रवृत्त्यभावादिति ध्येयम्। **ननु** 'कर्माण्यपि जैमिनिः फलार्थत्वात्' 'तत्फले च पुरुषार्थत्वात्' 'पुरुषश्च कर्मार्थत्वात्' इत्यत्र जैमिनिसूत्रत्रये कर्मफलपुरुषाणामपि शेषत्वमुक्तं तत्र च कर्मणां फलोद्देशेन प्रवृत्तकृतिसाध्यत्वेऽपि फलपुरुषयोस्तु पुरुषकर्मोद्देशेन प्रवृत्तपुरुषकृत्यसाध्यत्वात्कथं शेषत्वमिति चेत्, अत्र वक्तव्यम्—स्वर्गस्य साक्षात्कृतिसाध्यत्वाभावेऽपि यदा पुरुषः स्वर्गोद्देशेन दर्शादिषु प्रयतते तदैव फलान्तरेऽपूर्वद्वारेण स्वर्गो जायते नान्यथेति भवति पुरुषकृतिव्याप्यत्वं तस्य, तथा स्वर्गफलोद्देशेन दर्शाद्युद्देशेन वा प्रवृत्तः पुरुषो यदैव तदनुगुणनानुकूलं स्वं प्रयत्नेन सम्पादयति तदैव कर्म निष्पद्यते नान्यथेति तस्यापि भवति पुरुषकृतिव्याप्यत्वमिति सर्वमनवद्यम्।

तत्र श्रुतिं लक्षयति—**तत्र निरपेक्षो रव इति। तत्र** षण्णां श्रुत्यादिप्रमाणानां मध्ये इत्यर्थः। स्वकरणीये शेषबोधे प्रमाणान्तरनिरपेक्षः शब्दः श्रुतिरित्यर्थः। रव इत्युक्ते वाक्यादावतिप्रसङ्गस्तद्वारणाय **निरपेक्ष** इत्युक्तम्। तां च श्रुतिं विभजते—**सा च त्रिविधेति।** विधात्री विधानकर्त्री, अभिधात्री अभिधानकर्त्री, विनियोक्त्री विनियोगकर्त्री। तत्राद्यामुदाह-

विनियोक्त्री च । तत्राद्या लिङाद्यात्मिका । द्वितीया व्रीह्यादिश्रुतिः ॥ यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री । सापि त्रिविधा:—विभक्तिरूपा, एकाभिधानरूपा, एकपदरूपा चेति ।

(१२)

तत्र विभक्तिश्रुत्या अङ्गत्वं यथा 'व्रीहिभिर्यजेत' इति(१)तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम् । तदपि पुरोडाशप्रकृतितया । यथा पशोर्हृदयादिरूपहविःप्रकृतितया यागाङ्गत्वम् ।

Of them the first is one consisting of the Potential etc. To the second class belong statements such as the one relating to rice grains The text enjoining subservience is one on the mere hearing of which a relation (of subservience) is apprehended That (last) is again of three kinds in the form of cases, in the form of statement in one suffix (EKABHIDHANA) and in the form of statement in one word

(12)

Of them, subservience by case-text is illustrated by ' One should sacrifice with rice grains, ' where the text in the instrumental (proves) the subservience of rice grains to the sacrifice That too is due to the rice grains forming the original substance of the sacrificial cake, just as the sacrificial animal becomes subservient to the sacrifice by being the original substance of the oblation like the heart etc

इति तत्राद्या लिङाद्यात्मिकेति । तत्र तिसृणां श्रुतीनां मध्य इत्यर्थः । आदिना लेडादिग्रहः । अभिधात्र्युदाहरति—द्वितीया व्रीह्यादीति । तृतीयां विनियोक्त्रीं लक्षयति—यस्य चेत्यादिना । सम्बन्ध इति । विनियोज्यविनियोजकभावः सम्बन्ध इत्यर्थः । शेषशेषिभावो वा देय [illegible] ।

विनियोक्त्रीमपि श्रुतिं विभजते—सापि त्रिविधेति । तत्र विभक्तिरूपां विनियोक्त्रीमुदाहरति—तत्रेति । यद्वा ननु विनियोक्त्र्या श्रुत्या [illegible] तस्या अङ्गत्वबोधकत्वादित्याशङ्क्य तत्र विभक्तिश्रुतेरङ्गत्वबोधकत्वं दर्शयति—तत्रेति । तिसृणां विनियोक्त्रीणां मध्य इत्यर्थः । विभक्तिश्रुत्याङ्गत्वं बोध्यते यत्र तथोदाहरणं दर्शयति । पुरोडाशस्य इति शङ्कायां तदेवोदाहरणमाह—यथा व्रीहिभिरिति । तदपीति । व्रीहीणां यागाङ्गत्वमपीत्यर्थः । व्रीहीणां पुरोडाशप्रकृतितया यागाङ्गत्वं दृष्टान्तमाह—यथा पशोरिति । 'अथ हृद-

'अरुणया एकहायन्या गवा सोमं क्रीणाती' (तै. स.६-१-६-७) त्यस्मिन्वाक्ये आरुण्यस्यापि तृतीयाश्रुत्या क्रयाङ्गत्वम् । तदपि गोरूपद्रव्यपरिच्छेदद्वारा नतु साक्षात्, अमूर्तत्वात् ।

'व्रीहीन्प्रोक्षती' (तै ब्रा. ३-२-५-४) ति प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीं-

In the sentence, "He purchases Soma *with* a cow ruddy and one year old," even redness becomes subservient to the purchase, owing to the statement in the instrumental That too (takes place) by defining the material viz the cow, and not directly, owing to the incorporeality (of redness).

The sprinkling as enjoined in "One should sprinkle the rice grains" becomes subservient to the rice-grains

---

यस्यामेऽवद्यन्ति पशुम' इत्यादिशास्त्रात्पशोर्हृदयादिरूपहविर्दानद्वारैव यागाङ्गत्वं न साक्षात्तद्रूपत्वापत्तेरित्यर्थः । [क्वचित्तु साक्षात्पशोरेव यागाङ्गत्वं यथा पात्नीवतयागे । तत्र हि पशोरालभ्यस्य जीवत एवोत्सर्ग नियमे, 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ती'ति वाक्यात्] । तथाच यत्र पशोर्विशसनं हृदयाद्यवदानं च भवति तत्र हृदयादिद्वारैव पशुरिति सिद्धम् । तृतीयाविभक्तिरूपाया विनियोक्त्र्या उदाहरणान्तरमाह—**आरुण्यस्यापीत्यादिना** । 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाती'ति ज्योतिष्टोमप्रकरणे श्रुतस्यारुणिमगुणस्येत्यर्थः । क्वचित्पुस्तके मूलग्रन्थ एवेदं वाक्यमुदाहृतम् । अत्रारुणाशब्दोऽरुणिमानं गुणमाचष्टे तस्य गुणिविषयतया प्रयुक्तस्यापि '**नागृहीतविशेषणाविशिष्टबुद्धि**'रिति **न्यायेन** गुणबोधकत्वादन्वयव्यतिरेकसिद्धगुणमात्रव्युत्पत्तिकत्वाच्च । पिङ्गाक्षीशब्दस्तु पिङ्गलवर्णविशिष्टाक्षिमद्द्रव्यवाचको भवति । एकहायनीशब्दश्चैकसंवत्सरविशिष्टगोद्रव्यवाचकः । तौ च शब्दौ यद्यप्येकगोवाचकौ भवतस्तथापि विशेषणभूतधर्मभेदाच्छब्दद्वयमुपपद्यते तथ युगपत्प्रवृत्त सद्धर्मद्वयविशिष्टं गोद्रव्यं क्रयसाधनत्वेन निश्चसे । अरुणाशब्दस्यारुणिमगुणस्य कारकाणां क्रियान्वयनियमेन सोमक्रयणान्वयेऽपि साक्षात्साधनत्वेनामूर्तमरुणिमानं गुणं ■ विदधात्यमूर्तस्य साक्षात्त साधनत्वासंभवात् । किंतु सोमक्रयणसाधनीभूतगोद्रव्यपरिच्छेदकत्वेन तत्साधनम् । तथाच परस्परमनन्वितानामेवारुण्यपिङ्गाक्षीत्वादीनां कारकाणां क्रियान्वयनियमात्करणविभक्तिभि सोमक्रयणेऽङ्गत्वेनान्वये सत्यारुण्यादेर्गुणत्वेनामूर्तस्य स्वत सोमक्रयणसाधनत्वायोगात्तत्साधनगोद्रव्यपरिच्छेदकत्वेन पश्चात्परस्परं पार्ष्णिकान्वयो भवति एकहायनी गौ, सा पिङ्गाक्षरूपा चेत्याशयवानाह—**तदपीति** । क्रयाङ्गत्वमपीत्यर्थः ।

द्वितीयाख्यां विनियोक्त्रीं श्रुतिमुदाहरति—**व्रीहीन्प्रोक्षतीति** । **तच्चेति** । प्रोक्षणस्य व्रीह्यङ्गत्वं चेत्यर्थः । तच्चेत्यस्यापूर्वसाधनत्वप्रयुक्तमित्यनेनान्वयः । प्रोक्षणं व्रीहिस्वरूपार्थमेव

याश्रुत्या। तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम्, तस्य तेन विनाप्युपपत्तेः। किंत्वपूर्वसाधनत्वप्रयुक्तम् । व्रीहीनप्रोक्ष्य यागानुष्ठानेऽपूर्वानुपपत्तेः। एवं सर्वेष्वपूर्वप्रयुक्तमङ्गत्वं बोध्यम् ।

एवम् 'इमामगृभ्णन्रशनामृतस्यत्यश्वाभिधानीमादत्त' (तै स ५-१ २ १) इत्यत्र द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम् ।

by the statement in the accusative Again, that sprinkling is not for (producing) the form of the rice-grains, for it (i e, the form) is accounted for even without that (sprinkling) But it is employed as a means to the invisible potency (APŪRVA) For, the invisible potency does not arise if the sacrifice is performed without sprinkling the rice grains Thus should be understood the subservience of all (similar subsidiaries) as meant for the invisible potency

Similarly on account of the statement in the accusative "One should take up the horse bridle, with the incantation IMĀM AGRBHNAN RASHANĀM RTASYA," the Incantation is subservient to the horse-bridle

---

स्यादिति कुतस्तस्यापूर्वप्रयुक्त व्रीह्यङ्गत्वमित्यत आह—**प्रोक्षण नेति** । प्रोक्षणस्य व्रीहिस्वरूपार्थत्वाभावे हेतुमाह—**तस्येत्यादिना** । तस्य व्रीहिस्वरूपस्य । तेन विना प्रोक्षणेन विनेत्यर्थः । **ननु** यागानुगमनेनैव पूर्वसिद्धौ किं प्रोक्षणेन व्रीहिस्वरूपानुपयोगिनेत्यत आह—**व्रीहीनप्रोक्ष्येति** । अनुपनीतानुष्ठितवेदाध्ययनस्यापूर्वोत्पन्नस्ववद्व्रीहीणां प्रोक्षणं न कृत्वा तैरनुष्ठितस्य यागस्यापूर्वजनकत्वानुपपत्तेरित्यर्थः । प्रोक्षणे सिद्धमपूर्वप्रयुक्त व्रीह्यङ्गत्वमन्यत्रातिदिशति—**एवमित्यादिना** । एवं दर्शपूर्णमासप्रकरणसङ्कलनया द्वितीयाश्रुत्या प्रोक्षणस्य तण्डुलनिष्पत्तिप्रणालिकया व्रीहीणामपूर्वसाधनत्वप्रयुक्ताङ्गत्ववत्सर्वेषामवघातादीनां तत्तच्छ्रूयमाणवशादपूर्वसाधनत्वप्रयुक्तमेवाङ्गत्वमित्यर्थः ।

द्वितीयारूपाया विनियोक्त्र्याः श्रुतेरुदाहरणान्तरमाह—**एवमित्यादिना** । एवं द्वितीयाश्रुत्या प्रोक्षणस्य व्रीह्यङ्गत्ववदित्यर्थः । **ऋतस्येति** । सत्यस्येत्यर्थः । तथाच सत्यफलसम्बन्धिनीं रशनामिमां गृहीतवन्त इति मन्त्रार्थः । **अश्वाभिधान्यङ्गत्वमिति** । अश्वाभिधान्या अश्वरशनाया अङ्गत्वमित्यर्थः ।

'यदाहवनीये जुहोति' (तै. ब्रा. १-१-१०-५) इत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या । एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः ।

(१३)

'पशुना यजेत' (मानवश्रौतसूत्र १-८ ६-२४) इत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम्, यजेतेत्याख्याताभिहितसंख्याया भावनाङ्गत्वं समानाभिधानश्रुतेरेव । एकपदश्रुत्या च यागाङ्गत्वम् ।

The ÂHAVANÎYA is (stated to be) subservient to the sacrifice by the statement in the locative, "When he offers oblations in the ÂHAVANÎYA." Thus is to be understood subservience by statements in other cases also.

(13)

In "One should sacrifice with an animal," oneness and maleness become subservient to the particular case-relation (KÂRAKA), in consequence of the Common-Element-Text (and it becomes subservient to the sacrifice by the One-Word-Text). In YAJETA, the number expressed by the element of the verb (ÂKHYÂTA) is subservient to the Creativity (of purpose) in consequence of One-Element-Text itself; and it is subservient to the sacrifice owing to the One-Word-Text

---

सप्तमीं विभक्तिश्रुतिं विनियोक्त्रीं श्रुतिमुदाहरति—यदाहवनीय इति । एवमन्योऽपीति । दध्ना जुहोति पयसा जुहोतीत्यादौ होमानुवादेन दध्यादेस्तदङ्गत्वेन तृतीयाविभक्तिश्रुत्या विनियोग इत्यर्थः ।

एकाभिधानश्रुत्या एकपदश्रुत्या च विनियोक्त्रीं श्रुतिमुदाहरति—पशुना यजेतेति । पशुनेत्यत्रैकपदश्रुत्या एकत्वपुंस्त्वयोः पश्वङ्गत्वमेकाभिधानश्रुत्या कारकाङ्गत्वं च भवति । यजेतेत्यत्राख्याताभिहितसंख्याया एकाभिधानश्रुत्या भावनाङ्गत्वमेकपदश्रुत्या यागाङ्गत्वं च भवतीति भावः । यजेतेत्यभिहितसंख्याया समानाभिधानश्रुत्यैव भावनाङ्गत्वमिति सम्बन्धः । समानाभिधानश्रुतेरेवेति । एकाभिधानश्रुतेरेवेत्यर्थः । अभिधीयतेऽनेनेति व्युत्पत्त्याभिधानशब्देन शब्द उच्यते । पदश्रुत्या चेति । यजेतेत्येकपदश्रुत्या चेत्यर्थः ।

नचामूर्तायास्तस्याः कथं भावनाङ्गत्वमिति वाच्यम् । कर्तृपरिच्छेद-द्वारा तदुपपत्तेः । कर्ता चाक्षेपलभ्यः । आख्यातेन हि भावनोच्यते । सा च कर्तारं विनानुपपन्नेति तमाक्षिपति ।

(१४)

सेयं श्रुतिर्लिङ्गादिभ्यः प्रबला । लिङ्गादिषु न प्रत्यक्षो विनियोजकः शब्दोऽस्ति किंतु कल्प्यः । यावच्च तैर्विनियोजकःशब्दः कल्प्यते तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वेन तेषां कल्पकत्वशक्तिर्व्याह-

It should not be argued, "How can that which is incorporeal be subservient to Creativity?" That is accounted for through its (i. e. the number) defining the agent. The agent, again, is made out by inference. For, verb expresses Creativity; and since it is inexplicable, in the absence of an agent, implies him.

(14)

This Statement is stronger than Import and other means of proof. In Import and others, there is no statement directly enjoining subservience but one has to be assumed. And by the time they (i. e. Import etc.) lead (us) to infer

---

ननु सङ्ख्याया न यागाङ्गत्वं भावनाङ्गत्वं च भवति गुणत्वेनामूर्तत्वात् । नह्यमूर्तस्य रूपादेः कुत्रचिदङ्गत्वं दृश्यते अपि तु व्रीह्यादिद्रव्यस्यैव मूर्तभूतस्य ह्यङ्गत्वमित्याशङ्क्य परिहरति--नचेत्यादिना । भावनाया यागस्याप्युपलक्षणमेतत् । नचेति प्रतिषेधे हेतुमाह--कर्त्रिति । कर्तुर्यं-भावनाश्रयव्यापारवतो यागकर्तुः परिच्छेदद्वारा सङ्ख्याया भावनाद्यङ्गत्वोपपत्तेरित्यर्थः । स च कर्तैव समानाभिधानश्रुत्याख्यातार्थतया गम्यते न भावनायामित्याशङ्क्याह--कर्ता चाक्षेपलभ्य इति । आक्षेपोऽनुमानमर्थापत्तिर्वा तादृशाक्षेपेण लभ्योऽनुमेयः कल्प्यो वेत्यर्थः ।

तस्माद्भावनैवाख्यातवाच्या न कर्ता तद्वाच्य इत्यभिप्रेत्याह--आख्यातेन हि भावनोच्यत इत्यादिना । सा कर्तृव्यापाररूपा भावना कर्तारं विनानुपपद्यमाना पूर्वोक्तप्रकारेण कर्तारमाक्षिपतीत्यर्थः । एवं श्रुतेः प्रमाणान्तरानिरपेक्षविनियोजकत्वं निरूप्य तस्या लिङ्गादिभ्यः पञ्चभ्यः प्रमाणेभ्यः प्राबल्यमाह--सेयं श्रुतिर्लिङ्गादिभ्यः प्रबलेति । कुत इत्याकाङ्क्षायां तत्र हेतुमाह--लिङ्गादिषु न प्रत्यक्ष इत्यादिना । यावच्च लिङ्गादिभिर्विनियोजकशब्दोऽर्थप्रकाशनादिना कल्प्यते तावत्प्रत्यक्षोपलब्धया श्रुत्या शेषिणा शेषसम्बन्धबोधस्य कृतत्वेन

त्त्वात् । अतएवैन्द्र्या लिङ्गान्नेन्द्रोपस्थानार्थत्वम् । किंतु 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' (मैत्रायणी स.-३-२-४) इत्यत्र गार्हपत्यमिति द्वितीयाश्रुत्या गार्हपत्योपस्थानार्थत्वम् ।

**the statement of subservience, the directly expressed statement will have given effect to subservience, eventually making *their power to lead to the inference futile* Hence it is that in "By the Indra-Rc, he should worship the Gārhapatya-fire," owing to the statement in the accusative GĀRHAPATYAM, (the Rc) is meant for the worship of the Gārhapatya-fire**

---

लिङ्गादीनां विनियोजकश्रुतिकल्पनद्वारेण विनियोगशक्तेः प्रतिबद्धत्वादित्यर्थः । तत्र लिङ्गाच्छ्रुतेः प्राबल्यसिद्ध्यैव तस्मादपि दुर्बलेभ्यो वाक्यादिभ्यस्तस्याः प्राबल्यसिद्धये तावल्लिङ्गात्प्राबल्यमुदाहरणं प्रदर्शयन्साधयति—**अत एवेत्यादिना** । अतएव लिङ्गादिभ्यः श्रुतेः प्रबलत्वादेव । ऐन्द्र्या इति षष्ठी । 'नेन्द्र सश्चसि' तीन्द्रप्रकाशनसमर्थाया अपि ऋचो न लिङ्गादिन्द्रोपस्थानाङ्गत्वमित्यर्थः । **ननु** यदीन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गादैन्द्र्या ऋच इन्द्रोपस्थानार्थत्वं न भवति तर्हि तत्रान्यप्रकाशनसामर्थ्यादर्शनेन तस्याः कस्यचिदप्युपस्थानार्थत्वासंभवाद्वैयर्थ्यमेव स्यादित्याशङ्कते—**किंत्विति** । यद्यपीन्द्रशब्दस्य गार्हपत्येऽसौ रूढिर्नास्ति तथापि तस्यैश्वर्यगुणयोगेन यागसाधनत्वेन वा मुख्येन्द्रसदृशत्वाद्गुणवृत्तिरस्ति । तथाचैन्द्र्यास्तत्प्रकाशनसामर्थ्यस्यापि सत्त्वेन द्वितीयाश्रुत्या तदुपस्थानार्थत्वं निर्विघ्नमुपपद्यत इति समाधत्ते—**ऐन्द्र्या गार्हपत्यमित्यादिना** । अत्रायमाशयः—ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति श्रूयते । तत्र च '**कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे**' इत्यसावृगैन्द्री तत्रेन्द्रस्य प्रकाशनात् । भो इन्द्र, कदाचिदपि न हिंस्रोऽसि घातको न भवसि किंत्वाहुतिं दत्तवते यजमानाय प्रीयसे इति तस्या अर्थः । तत्रेन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गान्मन्त्रस्येन्द्रविषयक्रियासाधनत्वं गम्यते । यद्यसौ मन्त्र इन्द्रप्रधानक्रियायाः साधको न भवेत् तदानीमनेन मन्त्रेणेन्द्रप्रकाशनं व्यर्थं स्यात् । तस्मादेतन्मन्त्रकरणकक्रियां प्रति इन्द्रः प्रधानमित्येतादृशमुक्थ्यपादनं लिङ्गविनियोगः । कासौ क्रियेति विशेषजिज्ञासायामैन्द्र्योपतिष्ठत इत्यनन्यविरुद्धपदद्वयरूपेण वाक्येनोपस्थानक्रियायां पर्यवसानं क्रियते । तथा सत्यैन्द्रमन्त्रेणेन्द्रमुपतिष्ठेतेत्ययमर्थः पर्यवस्यति । तथा गार्हपत्यमित्यनया द्वितीयान्तपदस्थया श्रुत्या गार्हपत्यस्य प्राधान्यं गम्यते । तच्च गुणभूतां यत्किंचित्करणक्रियामन्तरेण न संभवति । ततस्तादृशीं कांचित्क्रियां प्रति गार्हपत्यः प्रधानमित्येतादृशमुक्थ्यपादनं श्रुतिविनियोगः, ऐन्द्र्योपतिष्ठत इति पदद्वये मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति । तथासत्यैन्द्रमन्त्रेण गार्हपत्यमुपतिष्ठेत इत्यर्थो भवति । यद्यपि प्रमाणत्वाविशेषाच्छ्रुतिलिङ्गयोर्विरोधे प्राप्ते व्रीहियववद्विकल्पः स्यात् । इन्द्रगार्हपत्ययोः प्रधानत्वाविशेषादुपस्थानस्य

( १५ )

शब्दसामर्थ्यं लिङ्गम् । यथाहुः ' सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते' (तन्त्रवार्तिक १२५) इति । सामर्थ्यं रूढिरेव । तेन समाख्यातोऽस्या भेदः । यौगिकशब्दसमाख्यातो रूढ्यात्मकलिङ्गशब्दस्य

(15)

Import is the power of words. Power of all words, as they say, is Import. This power is nothing but the conventional sense (RŪDHI), which distinguishes it from Appellation. For, Appellation, based on the etymological sense of a word is different from the Import based on the conventional sense. In virtue of it, the incanta-

---

च गुणत्वात् ' प्रतिप्रधानं गुणावृत्ति'रिति न्यायेनोपप्रधानावृत्त्या श्रुतिलिङ्गयोः समुच्चयो वा स्यात् । श्रुतिर्विनियुञ्जाना वस्तुसामर्थ्यमनुरुध्यैव विनियुङ्क्ते अन्यथा वह्निना सिञ्चेद्वारिणा दहेदित्यपि विनियुञ्जीत । तस्मात्तदुपजीव्यत्वेन लिङ्गस्य प्रबलत्वादिन्द्र एव मन्त्रेणोपस्थेयो वा स्यात् । तथाप्यैन्द्रमन्त्रस्य गार्हपत्येऽग्नौ मुख्यवृत्त्या सामर्थ्याभावेऽपि गुणवृत्त्या सामर्थ्यस्योक्त त्वात्सामर्थ्याभावकृतप्रतिबन्धाभावान्निर्विघ्ना श्रुतिराशु विनियुङ्क्ते । लिङ्गं तु विलम्बेन विनियुङ्क्ते । तथाहि तत्र प्रथमं मन्त्रपदानि स्वाभिधेयार्थं प्रतिपादयन्ति, तत ऊर्ध्वं मन्त्रस्य वस्तुप्रकाशनसामर्थ्यं निरूप्यते, तत ऊर्ध्वं च तत्सामर्थ्यवशात्साधनत्वावाचिनी प्रमाणान्तरग्राहिणी च श्रुतिः कल्प्यते । कल्पिता च श्रुतिः पश्चादैन्द्रमन्त्रेणेन्द्रमुपतिष्ठेतेति विनियुङ्क्ते इति मन्त्रपदाभिधेयप्रतिपादनविनियोगयोर्मध्यवर्तिनौ सामर्थ्यनिरूपणश्रुतिकल्पनव्यापारौ भवतः । प्रत्यक्षश्रुतिविनियोगपक्षे तु मन्त्रपदाभिधेयप्रतिपादनमात्रेण तस्या विनियोजकत्वसंभवात् न तौ मध्यवर्तिनौ व्यापारौ भवत इति श्रुतेः प्राबल्यात्तया लिङ्गं बाध्यते । एवं श्रुतेर्लिङ्गस्य दौर्बल्यमिन्द्रादेः पूर्वस्मात्पूर्वस्मादुत्तरस्य परस्य वाक्यादेरेकविनियोगविषय-[illegible]

[illegible] लिङ्ग-

[illegible] ।

[illegible] सामर्थ्य [illegible] स्यात्तद्वारणाय शब्देति विशेषणम् । सामर्थ्यं द्विविधं शब्दगतमर्थगतं चेति । तत्रार्थस्य लक्षणमप्रोक्तं तथैव शब्दमपि प्रदर्शयंस्तदर्थमाह—यथाहुरित्यादिना । अन्यत्र तु यथा 'स्रुवेणावद्यति' इत्यवदानसामान्यचोदनायामेऽपि स्रुवस्य लिङ्गात्सामर्थ्यादाज्यमात्रादिद्रव्यावदानविशेषादन्यत्र स्रुवेण मांसादिद्रव्यावदानस्य कर्तुमशक्यत्वादिति । ननु रूढिरूपस्य सामर्थ्यस्य समाख्यातो न भेद-

भिन्नत्वात् । तेन ' बर्हिर्देवसदनं दामी ' (मै. सं. १-१-२) ति मन्त्रस्य कुशलवनाङ्गत्वं न तूलपादिलवनाङ्गत्वम् । तस्य बर्हिर्दामीति लिङ्गात्तल्लवनं प्रकाशयितुं समर्थत्वात् । एवमन्यत्रापि लिङ्गाद्विनियोगो द्रष्टव्यः ।

**tion "BARHIR DEVASADANAM DĀMI" is subservient to the trimming of KUSHA, but not so subservient to the trimming of ULAPA and such other grass. For, owing to the Import of "BARHIR DĀMI" the incantation possesses the power to signify the trimming of it (i. e. KUS'HA). Similarly is to be found subservience, on the basis of Import, in other places also.**

---

स्यात् । तथाच 'बर्हिर्देवसदनं दामी' ति मन्त्रस्योलपादिलवनाङ्गत्वमपि स्यादित्याशङ्कयाह— **समाख्यातो भेद इति** । रूढिरूपस्य सामर्थ्यस्येति शेषः । यौगिकशब्दरूपसमाख्यातो रूढात्मकस्य लिङ्गशब्दस्य भेद एव प्रसिद्धेः । तथाच न तयोरभेद इत्यर्थः । समाख्यातो नाभेद इति पाठेऽपि स एवार्थः । रूढिरूपस्य सामर्थ्यस्य समाख्यातो भेदे फलितमाह–**तेनेति** । रूढिसमाख्ययोर्मिथोभेदेन पुरोडाशसदनभूतं बर्हिः खण्डयामीति श्रुतपदसामर्थ्यात् 'बर्हिर्देवसदनं दामी'ति मन्त्रस्य कुशकाशादिरूपाणां मुख्यबर्हिषां लवनाङ्गत्वं नतु समाख्यातो दर्भसदृशानामुलपादिरूपतृणविशेषाणां गौणबर्हिषां लवनाङ्गत्वमित्यर्थः । उक्तेऽर्थे हेतुमाह—**तस्येत्यादिना** । तस्येति बर्हिर्देवेत्यादिमन्त्रस्येत्यर्थः । तल्लवनमिति कुशलवनमित्यर्थः । **एवमन्यत्रापीति** । बर्हिर्देवसदनं दामीति मन्त्रस्य कुशलवनाङ्गत्वव 'दमये जुष्टं निर्वपामी' त्यादिमन्त्रस्यापि निर्वापादिप्रकाशनसामर्थ्यरूपाल्लिङ्गान्निर्वापादौ विनियोग इत्यर्थः । अत्रेदं बोध्यम् । यस्य हि मन्त्रस्य निर्वापाङ्गत्व संभवति यस्य यत्प्रकाशनसामर्थ्यं तस्य मन्त्रस्य तदङ्गत्वमिति न्यायात् । **तच्च लिङ्गं द्विविधं, सामान्यसंबन्धबोधकप्रमाणान्तरानपेक्षं तत्सापेक्षं चेति** । तत्र यद्विना यन्न संभवति तस्य तदङ्गत्वम् सामान्यसंबन्धबोधकप्रमाणान्तरानपेक्षकेवललिङ्गाद्भवति । यथार्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम्, अर्थज्ञानं विना तदनुष्ठानासंभवात् । यद्विना यत्संभवति तस्य तदङ्गत्वं तत्सापेक्षालिङ्गाद्भवति यथोक्तमन्त्रस्य निर्वापाङ्गत्वं, निर्वापस्य हि विनाऽपि मन्त्रमुपायान्तरेण स्मृत्वा कर्तुं शक्यत्वान्न मन्त्रो निर्वापस्वरूपार्थः संभवति, किंत्वपूर्वसाधनीभूतनिर्वापप्रकाशनार्थं एव । तादृशनिर्वापप्रकाशनार्थत्वं च न सामर्थ्यमात्राल्लभ्यते, सामर्थ्यस्य निर्वापप्रकाशनमात्रे सत्त्वात् । ततश्चावश्यं प्रकरणादिसामान्यसंबन्धबोधकं प्रमाण स्वीकर्तव्यम् । तथाच दर्शपूर्णमासप्रकरणे तस्य मन्त्रस्य पाठादेवानेन मन्त्रेण दर्शपूर्णमासापूर्वसंबन्धि किंचित्प्रकाश्यत इत्यवगम्यते । अन्यथा दर्शादिप्रकरणपाठस्य वैयर्थ्यापत्तेः । किं तद्दर्शपूर्णमासापूर्वसंबन्धि 'प्रकाश्यमित्याकाङ्क्षायां निर्वापप्रकाशनसामर्थ्यात्पुरोडाशनिर्वाप इत्यवगम्यते । निर्वापश्च पुरोडाशसंस्कारद्वाराऽपूर्वसंबन्धीति लिङ्गान्म-

(१६)

तदिदं लिङ्गं वाक्यादिभ्यो बलवत् । अतएव 'स्योनं ते सदनं कृणोमी'ति (मानवश्रौतसूत्र १-२-६१९) मन्त्रस्य पुरोडाशसदनकरणाङ्गत्वं सदनं कृणोमीति लिङ्गात् नतु वाक्यात् ।

16

This Import is more powerful than Sentence and other means of proof. Hence it is that the incantation, SYONAM TE SADANAM KRNOMI, is subservient to the preparation of the seat for the sacrificial cake, from the Import of SADANAM KRṆOMI but not from the Sentence

---

न्त्रस्य निर्वापार्थत्वे सति न तस्यानर्थक्यापत्तिः । तस्मात् 'अग्नये जुष्टं निर्वपामी'ति मन्त्रस्य प्रकरणाद्दर्शपूर्णमाससंबन्धितयाऽवगतस्य निर्वापप्रकाशनसामर्थ्यरूपाल्लिङ्गान्निर्वापाङ्गत्वमिति ।

तदिदं निरुक्तं सामर्थ्यरूपं लिङ्गं वाक्यप्रकरणादिभ्यः प्रबलमित्याह— तदिदमित्यादिना । अतएवेति । लिङ्गस्य वाक्यादिभ्यो बलवत्त्वादेवेत्यर्थः । 'स्योनं ते सदनं कृणोमी' त्यत्र 'घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्सीदामृते प्रतितिष्ठ । व्रीहीणां मेध सुमनस्यमानः' इति वाक्यशेषः । भोः पुरोडाश, ते तव स्योनं समीचीनं सदनं स्थानं कृणोमि करोमि, तच स्थानं घृतस्य धारया सुशेवं सुष्ठु सेवितुं योग्यं कल्पयामि । भो व्रीहीणां मेध व्रीहीसारभूत, त्वं सुमनस्यमानः समाहितमनस्कः सन् तस्मिन्नमृते समीचीने स्थाने सीद उपविश । प्रतितिष्ठ तत्र स्थिरो भवेत्यर्थः । तत्र च तस्मिन्नित्यनेन तच्छब्देन प्रकृतवाचकेन पूर्वोत्तरार्धयोरेकवाक्यत्वे सिद्धे मन्त्रद्वयस्याभावात्सर्वोऽप्ययं मन्त्रः स्थानकरणस्यार्थे पुरोडाशस्थापनस्य चार्थे भवति । तत्र विनियोजिका श्रुतिर्थेन कल्पनीया सर्वेणानेन मन्त्रेण स्थानं कर्तव्यमिति । तथा सर्वेणानेन मन्त्रेण तत्र पुरोडाशः स्थापनीय इति च । तथाच सदनकरणपुरोडाशस्थापनयोरस्य मन्त्रस्य विकल्पः समुच्चयो वा स्वेच्छया भविष्यतीति पूर्वपक्षः । तत्र [illegible] यदेतत्पूर्वोत्तरार्धयोः परस्परान्वयेनैकवाक्यसंपन्नं तदेतदुत्तरार्धस्य सदनकरणे शक्तिमकल्पयित्वा सकलं मन्त्रं सदने विनियोक्तुं नार्हतीति । तथा तदेव वाक्यं पूर्वार्धस्य पुरोडाशस्थापने शक्तिमकल्पयित्वा न पुरोडाशस्थापने कृत्स्नं मन्त्रं विनियोक्तुं प्रभवति । ततश्च लिङ्गकल्पनव्यवधानेन वाक्यं श्रुतिं प्रति विप्रकृष्यते । प्रत्यक्षं तु लिङ्गद्वयं तां श्रुतिं प्रति न विप्रकृष्यते । तथा सति लिङ्गेन वाक्यस्य बाधान्मन्त्रस्यार्धद्वयं सदनकरणस्थापनयोर्व्यवस्थितमिति राद्धान्तः । तमेतमभिप्रेत्याह— मन्त्रस्येत्यादिना । लिङ्गादिति । सदनकरणप्रकाशनसामर्थ्यरूपादित्यर्थः । नतु वाक्यादिति । मन्त्रस्य पुरोडाशसदनसादनरूपार्थकरणाङ्गत्वं, नतु सदनसादनरूपकृत्स्नशेषेषिरूपार्थप्रतिपादकत्वम् सदनं कृणोमि तस्मिन्सीदेत्येवं सहोच्चारणरूपाद्वाक्यादित्यर्थः ।

(१७)

समभिव्याहारो वाक्यम् । समभिव्याहारश्च साध्यत्वादिवाचकद्वितीयाद्यभावेऽपि वस्तुतः शेषशेषिवाचकपदयोः सहोच्चारणम् । यथा 'यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकं शृणोति' (तै. सं. ३-५-७-२) अत्र पर्णताजुह्वोः समभिव्याहारादेव पर्णताया जुह्वङ्गत्वम् ।

(१८)

नचानर्थक्यम् । अन्यथापि जुह्वाः सिद्धत्वादिति वाच्यम् । जुहूशब्देन तत्साध्यापूर्वलक्षणात् । तथाच वाक्यार्थः, पर्णतयावच्छिन्नधारणद्वारा जुह्वपूर्वं भावयेदिति । एवंच पर्णतया यदि जुहूः क्रियते तदेव तत्सा-

17

Sentence is utt[illegible] The utterance in close [illegible] the absence of the accu[illegible], it consists in the utterance, side by side, of words expressing the subservient and the principal. To illustrate: In "Whosoever uses a ladle of PARNA hears no disrepute of himself", owing to the very utterance in close juxtaposition of PARNA-ness and the ladle, the former becomes subservient to the latter.

18

It should not be urged that it is futile (to enjoin Parnaness of the ladle), as the ladle could be prepared even otherwise. For, the word "Ladle" indicates the invisible potency to be brought about therewith. Thus the sense to be understood from the sentence is "He should realise the invisible potency to be derived from the use of the ladle, through its PARNA-ness, by holding therewith

---

वाक्यं लक्षयति—**समभिव्याहार इति** । वाक्यमिति लक्ष्यनिर्देशः । समभिव्याहारशब्दं व्याचष्टे—**समभिव्याहारश्चेत्यादिना** । तत्रोदाहरणमाह—**यथेत्यादिना** । **पर्णताजुह्वोरिति** । शेषशेषिलक्षणयोरिति शेषः । **ननु** काष्ठान्तरेणैव जुह्वाः सिद्धत्वात्पर्णताया आनर्थक्यं स्यादित्याशङ्क्य परिहरति-**नचेत्यादिना** । नच वाच्यमित्यत्र हेतुमाह—**जुहूशब्देनेत्यादिना** । यदि जुहूः पर्णतयैव क्रियते तदैव जुह्वाऽपूर्वं जन्यते नान्यथेति भावः । फलितं वाक्यार्थमाह—**तथाचेत्यादिना** । क्वचित्पुस्तकेऽवत्तेत्यतः प्रागितितः परत्रैवं च पर्णतया यदि जुहूः क्रियते

ध्यमपूर्वं भवति नान्यथेति गम्यत इति न पर्णताया वैयर्थ्यम् । अवत्तह-
विर्धारणद्वारेति चावश्यं वक्तव्यम् । अन्यथा स्रुवादिष्वपि पर्णतापत्तेः ।

सेयं पर्णता अनारभ्याधीतापि सर्वप्रकृतिष्वेवान्वेति न विकृतिषु ।
तत्र चोदकेनापि तत्प्राप्तिसंभवात्पौनरुक्त्यापत्तेः ।

the oblation that is divided off (from the bulk)". So, "If the ladle is made of PARNA, then only the invisible potency to be brought about therewith is produced, not otherwise," is the sense that is understood (from the sentence), which shows that (the injunction re ) PARNA-ness is not futile. The words "by holding therewith the oblation that is divided off" must needs be used (in the explanation). Otherwise, PARNA-ness will have to be admitted in the case of SRUVA and other utensils also.

This PARNA-ness, though enjoined without reference to any particular sacrifice (ANĀRABHYĀDHĪTA), is to be construed with all the archetypes (PRAKṚTI) alone and not with the derivatives (VIKṚTI). For, since it obtains there (i. e. in the derivatives) by the Rule of Application by Protraction (CHODAKA), there will be the contingency of repetition.

---

तदेव तत्साध्यमपूर्वं भवति नान्यथेति गम्यत इति न पर्णताया वैयर्थ्यमिति पाठ. । अवद्यत इत्यवत्तं अवत्तं च तद्धविश्च तस्य धारणद्वारेत्यर्थः । अवत्तेत्यादेर्व्यावृत्तिमाह—अन्यथेत्यादिना । अन्यथाऽवत्तेत्यादेरनुपादान इत्यर्थः स्रुक्स्रुवादिभिराज्यहविर्धारणद्वारेणोपक्रियत इति भावः ।

ननु पर्णताया अनारभ्याधीतत्वादनारभ्यविधेश्च सामान्यविधित्वात्पर्णता सर्वेषु प्रकृतिविकृतियागेषु समन्वेतीत्याशङ्क्याह—सेयमित्यादिना । एवकारव्यावर्त्यमाह—न विकृतिष्विति । तत्रेति विकृतिष्वित्यर्थ. । चोदकेनेति । प्रकृतिवद्विकृति. कर्तव्येति चोदकसंज्ञितातिदेशवाक्येनेत्यर्थः । तत्प्राप्तिसंभवादिति । पर्णताप्राप्तिसंभवादित्यर्थ. । पौनरुक्त्यापत्तेरिति । 'प्रकृतौ वाऽद्विरुक्तत्वा' दिति न्यायविरोधेन पौनरुक्त्यरूपदोषापत्तेरित्यर्थः ।

( १९ )

यत्र समग्राङ्गोपदेशः सा प्रकृतिः यथा दर्शपूर्णमासादिः । तत्प्रकरणे सर्वाङ्गपाठात् । यत्र न सर्वाङ्गोपदेशः सा विकृतिः । यथा सौर्यादिः । तत्र कतिपयाङ्गानामतिदेशेन प्राप्तत्वात् । अनारभ्यविधिः सामान्यविधिः ।

( २० )

तदिदं वाक्यं प्रकरणादिभ्यो बलवत् । अत एव 'इन्द्राग्नी इदं हविः'

(19)

That is the Archetype where all the subsidiaries are specified: New and Full Moon sacrifices as others are instances in point For, in the topic relating to them (*i. e.* New and Full Moon sacrifices) all the subsidiaries are stated. That is the Derivative where not all the subsidiaries are specified The SAURYA and kindred sacrifices are instances of it. For, there several subsidiaries are obtained through the Rule of Application by Protraction (ATIDEŚHA). An Injunction without Topical Connection (ANĀRABHYA-VIDHI) is one that is common (to all sacrifices).

(20)

This Sentence is stronger than Topic and other means of proof. That is why the incantation 'INDRĀGNĪ IDAM

---

केय प्रकृतिर्विकृतिश्चेत्याकाङ्क्षायां तल्लक्षणमाह—यत्रेत्यादिना । अतिदेशेनेति । उक्तचोदकशब्दिताऽतिदेशवाक्येनेत्यर्थः । किंच यत्र चोदकेनाङ्गप्राप्तिस्तत्रानारभ्याधीतानां संनिवेश., दर्शपूर्णमासयोरपि चोदकप्रमाणेनाङ्गानामप्राप्तेः प्रकरणपठितैरेवाङ्गैर्नैराकाङ्क्ष्यात् तत्र पर्णताया संनिवेशो न्याय्य एव । गृहमेधीययागाद्यद्यपि कुत्रापि विकृतौ नाङ्गानामतिदेशेन प्राप्तिस्तथापि तस्य कृप्तोपकारैराज्यभागादिभिरेव नैराकाङ्क्ष्येण तत्रापि चोदकादङ्गाप्राप्ते· सत्त्वात्तत्रापि पर्णता· संनिवेशो भवत्येव. ', किंच योऽनारभ्यविधि· स. सामान्यविधिरित्युच्यते '· सामान्यविधेश्चास्पष्टत्वात्तस्य विशेषेणोपसंहारो भवति । तदभिप्रेत्याह—**अनारभ्यविधिः सामान्यविधिरिति** । किंच तद्धि वाक्यं प्रकरणाद्बलीयो भवति स्थानादितस्तु सुतराम् । तस्य प्रकरणादपि दुर्बलत्वात् । वाक्यस्य प्रकरणादिभ्यो बलवत्त्वादेव 'इन्द्राग्नी इदं हवि'—

(तै. ब्रा. ३-५-१०-३) इत्यादेरेकवाक्यत्वाद्दर्शाङ्गत्वं नतु प्रकरणाद्दर्शपूर्णमासाङ्गत्वम् ।

(२१)

उभयाकाङ्क्षा प्रकरणम् । यथा प्रयाजादिषु 'समिधो यजती'–(तै.सं.२-६-१-१) त्यादिवाक्ये फलविशेषस्यानिर्देशात्समिद्यागेन भावयेदिति

HAVIS,' etc. is subservient to the New Moon sacrifice, but not so subservient, from considerations of Topic, to the New and Full Moon sacrifices *both*.

(21)

Topic consists in mutual expectancy. To illustrate: In PRAYAJAS and other kindred rites, owing to the absence of the specification of any particular fruit in the sentence, "One should offer the Samidh offerings" etc. as soon as we apprehend the sense, "One should realise... by means of the Samidh-sacrifice;" there arise the expectancy about the thing to be helped to be effected, *to wit*, what (is to be realised). In the sentence enjoining

---

रित्यादिमन्त्रस्य दर्शवाक्यत्वाद्दर्शाङ्गत्वं नतु दर्शपूर्णमासप्रकरणाद्दर्शपूर्णमासोभयाङ्गत्वमित्याह—तदिदमित्यादिना । अत्र चेदं बोध्यम् 'अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राता मिति सूक्तवाके श्रूयते । तत्र च देवतावाचकं पदमग्नीषोमादिरूपं पौर्णमास्यादिकाले यथादेवतं विभज्य प्रयोक्तव्यमिति तृतीये स्थितम् । इदं हविरित्यादिपदमवशिष्टं तु यथोक्ताग्नीषोमेन्द्राग्निमन्त्रद्वयगतमपि यथाक्रममावास्यायामग्नीषोमपदपरित्यागेन पौर्णमास्यामिन्द्राग्निपदपरित्यागेन च पठनीयम् । तथाच सति तेषां मन्त्रभागानां सर्वशेषत्वबोधको दर्शपूर्णमासप्रकरणपाठोऽनुगृहीतो भवतीति प्राप्तेऽभिधीयते । अग्नीषोममन्त्रशेषस्येदं हविरित्यादिरूपस्येन्द्राग्निपदान्वयाश्रवणात्प्रकरणेन प्रथमं तदन्वयरूपं वाक्यं कल्पनीयं, तेन च वाक्येनेन्द्राग्निप्रकाशनसामर्थ्यरूपं लिङ्गं कल्पनीयम् । तच्च लिङ्गमनेन मन्त्रभागेनेन्द्राग्नीविषया काचित्क्रियानुष्ठेयेति विनियोजिकां तृतीयां श्रुतिं कल्पयति । तत प्रकरणविनियोगयोर्मध्ये त्रिभिर्व्यवधानं भवति । अग्नीषोमपदान्वयरूपं वाक्यं तु श्रूयमाणत्वाल्लिङ्गश्रुतिभ्यामेव व्यवधीयते । एवमिन्द्राग्नीमन्त्रशेषस्याप्यग्नीषोमपदान्वयाश्रवणात्प्रकरणेन प्रथमं तदन्वयरूपं वाक्यं कल्पनीयमित्यादि स्वयमूह्यम् । तस्माद्वाक्येन स्वस्माद्दुर्बलस्य प्रकरणस्य बाधितत्वात्तन्मन्त्रशेषस्तत्र तत्रैव व्यवतिष्ठत इति ।

प्रकरणं लक्षयति—उभयेत्यादिना । आकाङ्क्षात्वं चेल्लक्षणं शाब्दबोधकारणीभूताकाङ्क्षायामतिप्रसङ्गस्तद्वारणायोभयेति विशेषणम् । उभयत्वं चेत्तदोभयत्वावच्छिन्ने घटपटादावति–

बोधानन्तरं किमित्युपकार्याकाङ्क्षा । दर्शपूर्णमासवाक्येऽपि ( आपस्तम्ब श्रौ. सू. ३-१४-८ ) 'दर्शपूर्णमासाभ्यां स्वर्गं भावये' दिति बोधानन्तरं कथमित्युपकारकाकाङ्क्षा । इत्थं चोभयाकाङ्क्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् ।

तच्च प्रकरणं द्विविधम् । महाप्रकरणमवान्तरप्रकरणं चेति ।

(२२)

तत्र मुख्यभावनासंबन्धि प्रकरणं महाप्रकरणम् । तेन च प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् ।

एतच्च प्रकृतावेव उभयाकाङ्क्षायाः संभवान्नतु विकृतौ । तत्र

the New and Full Moon sacrifice, on the other hand, as soon as we apprehend the sense of "One should realise heaven by the New and Full Moon sacrifices," there arises the expectancy about the thing that would help (to bring about heaven), (UPAKĀRAKA). Thus on account of *mutual expectancy*, PRAYĀJA and such other subsidiaries become subservient to the New and Full Moon sacrifices.

That Topic is of two kinds: Major Topic and Minor Topic.

(22)

Of them, the Major Topic is one connected with the major *creativity*. And on account of it PRAYĀJA etc. are regarded as subservient to the New and Full Moon sacrifices.

This (Major Topic) is possible only in the case of the Archetype, where there is scope for mutual expec-

---

क्यासिस्तद्वारणायोत्तरं दलम् । परस्परमुभयाकाङ्क्षेत्यर्थः । प्रकरणमिति लक्ष्यनिर्देशः । तत्रोदाहरणद्वारोभयाकाङ्क्षां प्रदर्शयन् लक्षणसमन्वयं करोति—**यथेत्यादिना** । **इत्थं चेति** । अनेन प्रकारेण चेत्यर्थः ।

प्रकरणं विभजते—**तच्च प्रकरणमित्यादिना** । तच्चेति । उक्तलक्षणलक्षितं चेत्यर्थः ।

**तत्रेति** । महाप्रकरणावान्तरप्रकरणयोर्मध्य इत्यर्थः । **मुख्यभावनेति** । फलभावनेत्यर्थः । **तेन चेति** । महाप्रकरणेन चेत्यर्थः । अङ्गत्वम् । बोध्यत इति शेषः । तद्धि महाप्रकरणं प्रयाजादीन्यङ्गानि दर्शपूर्णमासयोर्विनियुङ्क्त इत्यर्थः । **एतच्च** । महाप्रकरणं चेत्यर्थः । तत्र

'प्रकृतिवद्विकृतिः कर्तव्या' इत्यतिदेशेन कथंभावाकाङ्क्षाया उपशमे-नापूर्वाङ्गानामप्युभयाकाङ्क्षया विनियोगासंभवात् । तस्मादपूर्वाङ्गानां स्थानादेव विकृत्यर्थत्वमिति ।

tancy But it is not so possible in the Derivative. For, there the expectancy about procedure being satisfied by the Rule of Application by Protraction—The Derivative should be performed like the Archetype—even Unprecedented Subsidiaries (APŪRVĀNGĀNĀM) cannot become subservient by mutual expectancy Therefore (they say) that (ITI) the Unprecedented Subsidiaries become subservient to the Derivative through Position alone

---

हेतुमाह—उभयेति । प्रकृतावेवेत्यनुषङ्गः । एवकारस्यावर्त्यमाह—नास्तीति । विकृतावुभयाकाङ्क्षाया असंभवादिति भावः । तत्रेति । विकृतावित्यर्थः । अतिदेशेनेति । अतिदेशवाक्यप्राप्तप्राकृताङ्गजातेनेत्यर्थः । कथंभावाकाङ्क्षायाः । इतिकर्तव्यताकाङ्क्षाया इत्यर्थः । तथाच यद्यप्युपहोमादीनामपूर्वाङ्गानामुपहोमादिभिर्भावयेत्किंभावयेदित्यस्त्याकाङ्क्षा तथापि सौर्यादिविकृतियागस्यातिदेशवाक्यप्राप्तप्राकृताङ्गैरेव नैराकाङ्क्ष्येण नापूर्वाङ्गानामप्युपहोमादीनामुभयाकाङ्क्षया विकृतौ विनियोगः संभवतीति भावः । ननु प्राकृताङ्गानां विकृतावपठितत्वादप्रत्यक्षाणां कथं विकृत्याकाङ्क्षोपशमहेतुत्वं, वैकृताङ्गानां तूपहोमादीनामत्र पठितत्वेन प्रत्यक्षाणां संभवत्याकाङ्क्षोपशान्तिहेतुत्वमिति चेन्न । तेषां विकृतौ पठितत्वेन प्रत्यक्षत्वेऽप्यन्यत्राकृतोपकारकत्वाच्छीघ्रं विकृत्याकाङ्क्षोपशान्तावसामर्थ्यात् । अतिदिष्टानां तु प्रकृतौ कृतोपकारकत्वेन संभवति तदाकाङ्क्षोपशमनसामर्थ्यम् । नच तेषामेव प्राकृताङ्गानां विकृतौ प्रकरणाद्ग्रहणं स्यादिति वाच्यम् । तेषामपि प्रकृतावुपकारकत्वेनोपक्षीणाकाङ्क्षत्वात् । नच प्राकृताङ्गानामत्रोपस्थापकाभावेनानुपस्थितत्वमिति वाच्यम् । उपमानप्रमाणस्योपस्थापकस्य सत्त्वेन तेषामत्रोपस्थितत्वात् । तथाहि सौर्यवाक्यस्य दर्शने औषधद्रव्यत्वस्यैकदेवत्यत्वस्य च सादृश्यस्य दर्शनेनानेन सदृशमाग्नेयवाक्यमित्याग्नेयवाक्यमुपमीयते गवयदर्शनादनेन सदृशी मदीया गौरिति गोरुपमानवत् । आग्नेयवाक्ये चोपमिते तेन तदर्थो ज्ञायते । [illegible] त्र्यंशभावनारूपस्तस्मिंश्च ज्ञाते सौर्यवाक्ये भावनाया भाव्यस्य करणस्य च विद्यमानत्वेन तत्राकाङ्क्षाभावेऽपीतिकर्तव्यताकाङ्क्षाया प्राकृतोपकारपृष्ठभावेनाग्नेयेतिकर्तव्यतामतिदिश्य सौर्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवदिति सिध्यति । तस्मादाग्नेयेतिकर्तव्यतयैव विकृत्याकाङ्क्षोपशमने सौर्यादौ विकृतावुभयाकाङ्क्षारूपप्रकरणाभावात्स्थानादेवोपहोमादीनामपूर्वाङ्गानां विकृतिशेषत्वमित्युपसंहरति—तस्मादिति ।

(२३)

अङ्गभावनासंबन्धिप्रकरणमवान्तरप्रकरणम् । तेन चाभिक्रमणादीनां प्रयाजाद्यङ्गत्वम् । तच्च संदंशेनैव ज्ञायते । तदभावे चाविशेषात्सर्वेषां फलभावनाकथंभावेन ग्रहणप्रसङ्गेन प्रधानाङ्गत्वापत्तेः ।

(२४)

एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वं संदंशः । यथाभिक्रमणे । तद् हि 'समानयते जुह्वाम् उपभृतस्तेजो वा' (तै. सं. २-६-१-२)

(23)

The Minor Topic is one that relates to the minor creativity. It is owing to it that the Stepping-near Ceremony like others becomes subservient to the PRAYĀJA etc, This (subservience to the subsidiary like the PRAYĀJAS) is gathered exclusively from Clasp (SANDANS'HA), For, in its absence, all (ceremonies) will have to be, without difference, admitted as being subservient to the principal (sacrifice) owing to the contingency (PRASAÑGA) of having to interpret them as supplying the procedure of the objective creativity

(24)

Clasp is insertion between two subsidiaries enjoined in relation to the same subsidiary (of the principal sacrifice), as in the case of the Stepping-near Ceremony

---

अवान्तरप्रकरणं लक्षयति—**अङ्गभावनेति** । **तेन चेति** । अवान्तरप्रकरणेन चेत्यर्थः । अत्रापि बोध्यत इति शेषः । **तच्चेति** । तेन तेषां तदङ्गत्वं चेत्यर्थः । **संदंशेनेति** । संदंशो लोहकष्टकविद्धलोहशलाकाद्वयरूपस्तेनेत्यर्थः । तन्न्यायेनेति यावत् । तदनङ्गीकारे दोषमाह—**तदभाव इति** । संदंशाभाव इत्यर्थः । **अविशेषात्** । प्रकरणाविशेषात् । **सर्वेषां** प्रयाजादीनामभिक्रमणादीनां च **कथंभावेन** इतिकर्तव्यतारूपेण **प्रधानाङ्गत्वापत्ते** दर्शादिप्रधानाङ्गत्वापत्तेः । तथाचाभिक्रमणादीनां प्रयाजाद्यङ्गत्वमद्दे संदंशस्याभावे सति दर्शादिप्रधानयागप्रकरणपाठाविशेषात्प्रयाजादिवदभिक्रमणादीनामपि दर्शादिफलभावनाया इतिकर्तव्यताकाङ्क्षया ग्रहणप्रसङ्गेन दर्शादिप्रधानयागाङ्गत्वापत्तेस्तत्संदंशेनैव ज्ञातुं शक्यत इति समुदायार्थः।

संदंशं लक्षयति—**एकाङ्गानुवादेनेति** । तत्रोदाहरणमाह—**यथाभिक्रमण इति** । अभिक्रमणे ह्येकस्य प्रयाजरूपस्याङ्गस्यानुवादेन विधीयमानयोः प्रयाजाङ्गयोरन्तराले विहितत्वं भवत्येव । तदेवाह—**तद्धीत्यादिना** । तद्धि, अभिक्रमणं हीत्यर्थः । **समानयते**

इत्यादिना प्रयाजानुवादेन किंचिदङ्गं विधाय विधीयते 'यस्यैवं विदुषः प्रयाजा इज्यन्ते भैभ्यो लोकेभ्यो भ्रातृव्यान्नुदतेऽभिक्रामं जुहोत्य-भिजित्यै' (तै स २ ६ १ ४) इति । तदनन्तरं 'यो वै प्रयाजानां मिथुनं वेद'(तै स २ ६ १ ४)त्यादिना किंचिदङ्गं विधीयते । अतः प्रयाजाङ्ग-मध्ये विहितमभिक्रमणं तदङ्गम् । प्रयाजैरपूर्वं कृत्वा यागोपकारं भाव-येदिति ज्ञाते कथमेभिरपूर्वं कर्तव्यमिति कथंभावाकाङ्क्षायाः सत्त्वात् । सा च संदंशपठितैरभिक्रमणादिभिः शाम्यति ।

For, it is enjoined, with the words " He, for whom knowing this, the PRAYĀJS are *offered*, drives from these worlds his enemies, he should offer them for triumph, stepping near (the fire)," after some rite is enjoined in relation to PRAYĀJAS with the words, "From the UPABHṚT, he should pour out ghee (TEJAS) in the ladle etc " Immediately after that is laid down another subsidiary, with the words, " He who knows the pair of PRAYĀJAS " etc Thus the Stepping near Ceremony laid down between two subsidiaries of PRAYĀJAS also becomes one like them, For, when we get the sense, " One should contribute to the sacrifice by bringing about the invisible potency by means of PRAYĀJAS", there arises the expectancy about the procedure (KATHAMBHĀVA),-*How* could these bring about the invisible potency? And this expectancy is satisfied by hte Stepping-nea- Ceremony along with others that are specified in the Clasp

---

जुह्वामुपभृत इति । उपभृतो घृतपात्रविशेषाज्जुह्वां जुहूरूपपात्रविशेषे घृत समानयत इति मन्त्रार्थ । किंचिदङ्गमिति । उपभृत पात्राज्जुह्वां प्रयाजार्थं घृतानयनरूपमङ्गमित्यर्थ । तदनन्तरमपीति । अभिक्रमणान-तरमपीत्यर्थ । तदनन्तरमपात्यस्य 'किंचिदङ्ग विधीयत' इत्युत्तरेणान्वय । प्रयाजाङ्गमिति पाठे तु तस्यापि किंचिदङ्गमित्यनेनोत्तरेणैवान्वय । भ्रातृव्यानिति । शत्रूनित्यर्थ । नुदत इति । व्यथयति अपनुदतीति वार्थ । जयतीति यावत् । अभिक्रामं जुहोत्यभिजित्या इति । विजयायाहवनीय सर्वत सचरणं कृत्वा जुहुयादित्यर्थ । मिथुनं वेदेति । युगल जानातीत्यर्थ । अत इति । प्रयाजानुवादेन विहितान्दङ्गमध्ये विहितत्वादित्यर्थ ।

नचाङ्गभावनायाः कथंभावाकाङ्क्षाऽभावः; भावनासामान्येन तत्रापि तत्संभवात् ।

( २५ )

तदिदं प्रकरणं क्रियाया एव साक्षाद्विनियोजकं द्रव्यगुणयोस्तु तद्द्वारा । तथाहि । यजेत स्वर्गकाम इत्यत्र फलभावनायां कथंभा-

Nor is it that the minor creativity does not possess the expectancy for procedure; for the latter is possible even there (*i. e.* in the minor creativity), owing to its having the common feature of creativity

(25)

This Topic determines directly the subservience of *action* only, while it determines the subservience of *substance* and *quality* (indirectly) through it (*i e* action). To explain: In " One aspiring to heaven should sacrifice,",

---

**ननु** प्रयाजानामितिकर्तव्यताकाङ्क्षाभावात् तत्र संदंशेनाप्यभिक्रमणस्याङ्गत्वेनान्वयः । 'साकाङ्क्षस्यैव गुणेऽन्वेषणे'ति न्यायादित्यत आह—**प्रयाजैरित्यादिना** । सा च प्रयाजानामितिकर्तव्यताकाङ्क्षा संदंशलब्धैरेवाभिक्रमणादिभिः शाम्यतीत्याह—**सा चेत्यादिना** । तथाचोक्तम् '**परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः । ज्ञाते पुनश्च तैरेव संदंशेन तदिष्यते**' इति । **ननु** प्रयाजभावनाया अङ्गभावनात्वेन कथंभावाकाङ्क्षाभावान्न प्रयाजभावनाकथंभावेनाभिक्रमणं गृह्यत इत्याशङ्क्य परिहरति **नचेत्यादिना** । प्रयाजादिभावना कथंभावाकाङ्क्षाशून्या अङ्गभावनात्वादित्यत्र हेतोरसाधारणानैकान्तिकत्वात्साकाङ्क्षत्वसाधने 'हेतुसत्त्वाच्च न प्रयाजाद्यङ्गभावनाया' कथंभावाकाङ्क्षाशून्यत्वमित्याह—**भावनासाम्येनेति** । प्रयाजाद्यङ्गभावना कथंभावाकाङ्क्षा भावनात्वाद्दर्शादिभावनावदिति प्रयोगोऽत्र बोध्यः । नचावहननादिभावनायां व्यभिचारः, तस्याः पक्षसमत्वात् । **तत्रापि तत्संभवादिति** । प्रयाजाद्यङ्गभावनायामपि कथंभावाकाङ्क्षासंभवादित्यर्थः ।

निरूपितप्रकरणस्य साक्षाद्विनियोज्यविषयमुपन्यस्यति—**तदिदमित्यादिना** । प्रकृतस्यैव व्यवहितविनियोज्यमादर्शयति—**द्रव्येति** । **तद्द्वारेति** । क्रियाद्वारेत्यर्थः । अत्र ■ द्रव्यस्य क्रियाद्वारैव प्रकरणं विनियोजकं गुणस्य तु द्रव्यक्रियोभयद्वारा विनियोजकमिति भावः[1] । **फलभावनायामिति** । फलभावनायां क्रियाजातमितिक-

---

१ v. l. साम्येन ।

वाकाङ्क्षायां संनिधिपठिताऽश्रूयमाणफलकं क्रियाजातमुपकार्याकाङ्क्षयेतिकर्तव्यतात्वेनान्वेति । क्रियाया एव लोके कथंभावाकाङ्क्षायामन्वयदर्शनात् । नहि कुठारेण छिन्द्यादित्यत्र कथंभावाकाङ्क्षायामुच्चार्यमाणोऽपि हस्तोऽन्वेति किंतु हस्तेनोद्यम्य निपात्येति उद्यमननिपातने एव, हस्तश्च तद्द्वारैवान्वेतीति सार्वजनीनमेतत् ।

when there is the expectancy about the procedure relating to the *objective-creativity*, the *set of actions* that is specified in close context (with the creativity) and the fruit of which is not stated answers the purpose of the procedure, owing to the expectancy about the fruit they (i e actions) contribute to bring about For, in worldly usage, it is seen that action alone is construed with the expectancy about the *procedure* Just as in the expectancy about the procedure, in the (injunctory sentence), "One should lop with the axe," it is not the *hand* though it is raised that is to be construed (as the procedure), but only the raising and lowering (of the axe)-because by raising (the axe) with the hand and lowering it (will the injunction be carried out) The hand is construed (with the procedure) only through them (i e. actions) This is the experience of all men

---

र्तव्यतात्वेनान्वेतीति सबन्ध । भिन्नप्रकरणस्थक्रियाया अन्यत्रक्रियायामन्वयापत्तिवारणाय संनिधिपठितमित्युक्तम् । श्रूयमाणफलस्य क्रियाजातस्येतिकर्तव्यतात्ववारणायाश्रूयमाणफलमित्युक्तम् । प्रधानस्योपकारकाकाङ्क्षाभावे तत्र तदन्वयादर्शनात्कथंभावाकाङ्क्षायामित्युक्तम् । गुणस्याप्युपकार्याकाङ्क्षाभावेऽप्युपकारकत्वेनान्वयादर्शनादुपकार्याकाङ्क्षयेत्युक्तम् । इतिकर्तव्यताकाङ्क्षायां क्रियाया एव साक्षादन्वये लोकप्रसिद्धिं हेतुत्वेन दर्शयति—क्रियाया एवेत्यादिना । क्रियाया एवान्वयदर्शनादित्यन्वय इत्यर्थ । कुठारेण छिन्द्यादित्यत्र कथमिति कथंभावाकाङ्क्षायां हस्तेनेत्युच्चार्यमाणोऽपि हस्तो नहि च्छिदिभावनायां साक्षादन्वेतीत्यभिप्रेत्याह—नहीत्यादिना । उद्यमननिपातने एवान्विते इति शेष । उद्यमनं च निपातनं चोद्यमननिपातने इति द्विवचन । सन्धिस्तु लेखकप्रमादज । यद्वा उद्यमनेन निपातनं उद्यमननिपातनं इति व्याख्येयम् । अत्र चान्वेतीत्यनुषङ्ग । तद्द्वारैवेति । उद्यमननिपातनद्वारैवेत्यर्थ । सार्वजनीनमिति । सर्वेषु जनेषु भवमित्यर्थ । सर्वजनप्रसिद्धमिति यावत् । किंच कथंभावाकाङ्क्षा नाम करणगतप्रकाराकाङ्क्षा । करणगतप्रकारतात्पर्यको न भवति । सामान्यस्य भेदको विशेष प्रकार, सामान्यं च क्रिया

( २६ )

इदच स्थानादिभ्यो बलवत् । अतएवाक्षैर्दीव्यति राजन्यं जिनातीति ( तै ब्रा १-८-१६ ) देवनादयो धर्मा अभिषेचनीयसंनिधौ पठिता अपि स्थानान्न तदङ्गं, किंतु प्रकरणाद्राजसूयाङ्गमिति । Because

(26)

This (Topic) is stronger than Position and other means of proof Hence only the attributes of gambling etc, specified in "He should play at dice," "He should conquer a king" and such other sentences, though stated in close context with the ABHISHECHANĪYA, are not by reason of their Position subservient to it, on the contrary, they are subservient, on the basis of Topic to the RĀJASŪYA, as they say (ITI)

---

रूपमेवाख्यातेनोच्यते । 'यजेत स्वर्गकाम' इत्यस्य ह्ययमर्थ—यागेन तथा कर्तव्य यथा स्वर्गो भवतीति, क्रियासामान्यस्य च विशेष क्रियैव भवति, नहि ब्राह्मणविशेष परिव्राजकादिरब्राह्मणो भवति एवच करणगतक्रिया-विशेषाकाङ्क्षापरनामधेयाया कथभावाकाङ्क्षाया क्रियैवान्वेतीति युक्तम् । स च करणगत क्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्त क्रियारूप एवेति युक्त तस्य प्रकरणेनैव ग्रहण तस्य च करणगतत्व तदुपकारकत्वमेव तेन विना यागेनापूर्वाजननात् । नह्युद्यमननिपातनव्यतिरेकेण कुठारेण द्वैधीभावो जन्यते । तत्सिद्ध कथभावाकाङ्क्षया क्रियैवान्वेतीति ।

तदिद प्रकरण स्थानादितो बलीयो भवति । तथाहि राजसूयप्रकरणे पवित्रिसोमभागा बहव समप्रधानभूता पठ्यन्ते । तत्र च कश्चिदभिषेचनीयसञ्ज्ञक सोमयाग पठित । तस्य हि सनिधौ विदेवनादयो धर्मा 'अक्षैर्दीव्यति राजन्य जिनाति शौन शेपमाख्यापयती'ति श्रूयन्ते । जिनाति जयतात्पर्य । बह्वृचब्राह्मणे समाम्नात शुन शेपविषयमुपाख्यान शौन शेप तदाख्यापयतीत्यर्थ । तत्रच विदेवनादीना सनिधिबलादभिषेचनीयाङ्गत्वमिति प्राप्ते राद्धान्त, राजसूयेतिकर्तव्यताकाङ्क्षायामनुवृत्तायां विहिता विदेवनाद्य प्रकरणेन राजसूयशेषा एव भवन्ति । राजसूयश्च बहुयागात्मको भवति । ततश्च तत्रत्यसर्वयागशेषत्व विदेवनादीनां सिद्धयति । किंचाभिषेचनीयस्य काचिदप्याकाङ्क्षा विदेवनादिषु नास्त्येव । तस्य ज्योतिष्टोमविकृतित्वेनातिदिष्टैरेव प्राकृताङ्गैस्तदाकाङ्क्षानिवृत्ते । ननु सनिहितविधिबलादाकाङ्क्षोत्थाप्यत इति चेत् तर्ह्याकाङ्क्षारूपमन्तराले प्रकरणमादौ परिकल्प्य तद्द्वारा वाक्यलिङ्गश्रुतिकल्पनया सनिधिर्विप्रकृष्यते, राजसूयाकाङ्क्षारूप महाप्रकरण तु क्लृप्तत्वादकल्प्याऽऽकाङ्क्षया सनिकृष्यते ततश्च प्रकरणेन संनिधेर्बाधात्सर्वयागशेषा विदेवनादयो धर्मा इत्यभिप्रेत्य प्रकरणस्य स्थानादिभ्यो बलवत्त्वमाह—इदचेत्यादिना ।

( २७ )

देशसामान्यं स्थानम् । तद्द्विविधम् । पाठसादेश्यमनुष्ठानसादेश्यं चेति । स्थानं क्रमश्चेत्यनर्थान्तरम् । पाठसादेश्यमपि द्विविधम् । यथासङ्ख्यपाठः संनिधिपाठश्चेति ।

( २८ )

तत्र 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' (मै स २-१-१) 'वैश्वानरं द्वादशकपालं निर्वपे' (मै स २-१-२) दित्येवं क्रमविहितेषु 'इन्द्राग्नी रोचना दिव' (मै स ४-११-१) इत्यादीनां याज्यानुवाक्यामन्त्राणां

Position consists in having a common place It is of two kinds Textual Commonness of Position and Ritualistic Commonness of Position Position and Order are synonyms Textual Commonness of Position again is of two kinds Text in Respective Order and Text in Close Context

(28)

Of these subservience by Text in Respective Order is illustrated by the following: When the sacrifices are enjoined, in their respective order, with the injunctions, "One should offer the Eleven Potsherd-Offering in honour of Indra and Agni" and "One should offer the Twelve Potsherd-Offering in honour of Vais'hwanara," of the YAJYAS and ANUVAKYAS viz INDRAGNI ROOHANA

---

स्थानं लक्षयति—**देशसामान्यमिति** । संनिधिविशेषत्वमिति लक्षणान्तरम् । स्थानं क्रमश्चेति लक्ष्यत्वेन निर्दिश्यते । पाठसमानदेशत्वेनानुष्ठानसमानदेशत्वेन च स्थानं विभजते—**तद्द्विविधमित्यादिना** । यथासङ्ख्यपाठत्वेन संनिधिपाठत्वेन च पाठसमानदेशत्वमपि विभजते—**पाठसादेश्यमित्यादिना** ।

तत्र यथासङ्ख्यपाठत्वेन समानदेशत्वमुदाहरति—**तत्रैन्द्राग्नमित्यादिना** । **प्रथमस्य प्रथममिति** । प्रथमस्यैन्द्राग्नमित्यैन्द्राग्नेष्टियागस्य '**इन्द्राग्नीरोचना दिव**' इति प्रथमं याज्यानुवाक्यायुगलमङ्ग, द्वितीयस्य वैश्वानरमिति वैश्वानरेष्टियागस्य '**वैश्वानरोऽजीजन**'

यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवंरूपो विनियोगो यथासंख्यपाठात् । प्रथमपठितमन्त्रस्य हि कैमर्थ्याकाङ्क्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते समानदेशत्वात् । एवं द्वितीयमन्त्रस्यापि ।

वैकृताङ्गानां प्राकृताङ्गाननुवादेन विहितानां संदंशापतितानां विकृत्यर्थत्वं संनिधिपाठात् यथा आमनहोमानाम् । तेषां हि कैमर्थ्याकाङ्क्षायां फलं विकृत्यपूर्वमेव भाव्यत्वेन संबध्यते, उपस्थितत्वात्, स्वतन्त्रफलकत्वे विकृतिसंनिधिपाठानर्थक्यापत्तेः ।

DIVAH etc, the first and second incantation become respectively subservient to the first and the second ( sacrifices ). For when there is the expectancy about the purpose (KAIMARTHYA) of the ( incantation ) cited first, it is the action mentioned first that presents itself, owing to the correspondence ( lit. sameness ) of Place. Similarly with *regard to (the expectancy of) the second incantation.*

The subservience to the Derivative of the subsidiaries of the latter ( i. e Derivative )—unless the subsidiaries are laid down with reference to a subservient act of the archetype or occur within a clasp results from Text in Close Context, as in the case of the ĀMANAHOMAS. For, when there is the expectancy about their utility, the fruit viz. the invisible potency of the Derivative is related as the matter brought about, because it stands in close proximity. If they had an independent fruit, there would arise the contingency of the futility of their specification in close context with the Derivative.

---

दित्यादि द्वितीयमङ्गमित्यर्थः । एवंरूपे विनियोगे हेतुमाह—**प्रथमपठितमन्त्रस्येत्यादिना** । **कैमर्थ्याकाङ्क्षायामिति** । किमर्थोऽयं मन्त्र इति कैमर्थ्याकाङ्क्षायामित्यर्थः । **एवं द्वितीयमन्त्रस्यापीति** । किमर्थोऽयं मन्त्र इति द्वितीयमन्त्रस्यापि कैमर्थ्याकाङ्क्षायां द्वितीयस्थाने विहितमेव कर्मोपतिष्ठते समानदेशत्वादित्यर्थः । कोऽर्थो यस्य स किमर्थः तस्य भावः कैमर्थ्यं तस्याकाङ्क्षायामिति निरुक्त्या किमनेन मन्त्रेण भाव्यमिति सिद्ध्यति ।

संनिधिपाठात्तु यानि वैकृतान्यङ्गानि प्राकृताङ्गाननुवादेन विहितानि संदंशापतितानि तेषां विकृतौ विनियोग इत्याह—**वैकृताङ्गानामित्यादिना** । तत्रोदाहरणमाह—**यथा आमनहोमानामिति** । ' अमनसे स्वाहा, रेतस्विने स्वाहे ' त्यादय आमनहोमाः । यद्वा अम-

( २९ )

पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपवसथ्येऽह्नि अग्नीषोमीयः पशुरनुष्ठीयते तस्मिन्नेव दिने ते धर्माः पठ्यन्ते। अतस्तेषां

(29)

**The subservience of the attributes of the sacrificial animal to the sacrificial animal in honour of Agni and Soma is owing to the Ritualistic Commonness of Position (To explain:)** *On the Aupavasathya Day, is sacrificed*

---

नेहोमानामिति पाठ प्रामादिक एव, किन्त्वामनहोमानामिति सकाररहित आपूर्व एव पाठः साधु । तत्र च '**वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम** ' इत्यस्य काम्येष्टियागस्य सन्निधौ श्रूयन्त आमनहोमा ' आमनदेवा इति तिस्र आहुतीर्जुहोती'ति । नन्वामनहोमाना फलाकाङ्क्षायां फलवद्विकृत्यपूर्वमेव भाव्यत्वेन सबध्यत इत्यसत्। तेषां मुख्ययागत्वे विरोधाभावात्। नन्वाग्नेयादीनां षण्णामनुमत्यादीनां बहूनां मुख्यत्वं विरुद्धमित्याशङ्क्य यथा ' दर्शपूर्णमासाभ्यां स्वर्गकाम ' इति वाक्येनाग्नेयादीनां फलसंबन्धावगमस्तथाऽऽमनहोमानां फलसंबन्धावगमाभावान्न प्राधान्यं युज्यते । ' सांग्रहणीं निर्वपेद्ग्रामकाम ' इति वाक्यस्य तु सांग्रहण्या एव फलसंबन्धबोधकत्वेनामनहोमानां तत्संबोधकत्वाभावात । तस्मात् '**फलवत्संनिधावफलं तदङ्ग** '-मिति न्यायात्फलवत्या सांग्रहण्या- संनिधावाम्नाता अफला आमनहोमास्तदङ्गमित्यभिप्रेत्य किमर्था इमे क्रियन्त इति कैमर्थ्याकाङ्क्षायां फलवत्तया विकृत्यपूर्वस्यैव भाव्यत्वेन संबन्धे हेतुमाह—**उपस्थितत्वादि**ति । संनिधिप्रमाणेनोपस्थितत्वादित्यर्थः । नन्वामनहोमानां सांग्रहणीसंनिधिपाठेऽपि **विश्वजिन्न्यायेन** स्वतन्त्रफलकत्वमेव किं न स्यादित्यत आह—**स्वतन्त्रफलकत्व इत्यादिना । फलवत्कर्मसंनिधौ पठितस्यैवाश्रूयमाणफलस्य विश्वजिन्न्यायेन स्वतन्त्रफलं कल्प्यते** । अन्यथा प्रयाजादीनामपि तन्न्यायेन स्वतन्त्रफलकत्वापत्तिः स्यात् । अफलस्य फलवत्संनिधौ पाठस्तु तदङ्गत्वायैव । तदभावेऽनर्थकत्वमेव तस्यापद्येतेति भावः ।

संनिधिपाठसादेश्येन विनियोगं निरूप्यानुष्ठानसादेश्येन विनियोगं निरूपयति—**पशुधर्माणामित्यादिना** । पशुधर्मा उपाकरणपर्यग्निकरणादयस्तत्र 'प्रजापतेर्जायमाना',' इदं पशुभिः त्वाभ्यागृभ्णामी' त्यादिमन्त्रेणोपाकरणम्, दर्भमुल्मुकेन त्रि प्रदक्षिणीकरणं **पर्यग्निकरणम्**, यूपे रज्ज्वा बन्धनं यूपानियोजनमित्यादयो बोध्याः । तेषामनुष्ठानसमानदेशत्वादग्नीषोमीयपश्वङ्गत्वमेव न तु सवनीयादिपश्वङ्गत्वमित्यर्थः । किंच **ज्योतिष्टोमप्रकरणे** त्रयः पशवः समाम्नाता अग्नीषोमीयः सवनीयोऽनुबन्ध्यश्चेति । तत्राग्नीषोमीयः पशुः सोमक्रयणादह्नः प्राचीने औपवसथ्यनामकेऽह्नि धिष्ण्यनिर्माणादूर्ध्वं समनुष्ठीयते तत्र

कैमर्थ्याकाङ्क्षायामनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन संबध्यते ।

( ३० )

तच्च स्थानं समाख्यातः प्रबलम् । अतएव शुन्धनमन्त्रः सांना- ८

the Agni-Soma animal (In the details to be performed on the same day) are those attributes specified Hence when there is the expectancy about the purpose they are to serve, it is the invisible potency of the animal, standing close by as the matter to be worked out, that is related (to the expectancy) as the thing to be brought about.

(30)

This Position is stronger than Appellation. Hence it

---

चैवाहि ते धर्मा. समाम्नाताः । ततश्च तेषां शेष्याकाङ्क्षायामनुष्ठेयतयोपस्थितमग्नीषोमीयपशु-पूर्वमेव संनिहितो भाव्यत्वेन संबध्यते, नतु सवनीयानुबन्ध्यापूर्वे, तत्संनिधिविरहात् । अथ कथमिति चेन्न, सवनीयपशोः सौत्यनामकेऽह्नि समाम्नाना 'दाश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोती'ति । अनुबन्ध्यस्य त्ववभृथान्ते श्रूयमाणत्वाच्च । तस्मादुपपद्यते ह्येतेषां धर्माणां संनिधिनाग्नीषोमीयार्थत्वं, सवनीयानुबन्ध्ययोस्तु चोदकातऽतिदिश्यन्ते । नच पाठसादेश्यादेव तेषां तदर्थत्वं किं न स्यादिति, वाच्यम् । अग्नीषोमीयपशोः सोमक्रयसमीपे पाठात्तेन तत्त्वासंभवात् । नच क्रयसंनिधावेव तस्यानुष्ठानमपि किं न स्यादिति वाच्यम् । 'स एष द्विदैवत्यः पशुरौपवसथ्येऽहनि आलब्धव्य' इति वाक्यात्तस्य तत्रानुष्ठानानुपपत्तेः । नच स्थानात्प्रकरणस्य बलीयस्त्वात्तेन तद्धर्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति वाच्यम् । तस्य सोमयागत्वात्तद्धर्मग्रहणायोगात् । सोमो ह्यभिषवादीन्धर्मानाकाङ्क्षति नतु यूपनियोजनविशसनादीन् । तस्मात् '**आनर्थक्यप्रतिहतानां विपरीतं बलाबल**'मिति न्यायेन प्रकरणं प्राधान्यात्प्रच्याव्य स्थानात्पशुयागार्थत्वमेव पशुधर्माणां युक्तं भवति । नचाङ्गिन्यनर्थकाः सन्तस्ते धर्मा अङ्गेषु त्रिष्वपि पशुयागेष्वविशेषेणावतिष्ठन्त्विति वाच्यम् । संनिधिरूपस्य विशेषस्य दर्शितत्वात् । नचाग्नीषोमीयेऽपि तद्धर्माणां प्रकरणादेव विनियोगः किं न स्यादिति वाच्यम् । कृतोपकारैरेव प्राकृतधर्मैरग्नीषोमीयस्येतिकर्तव्यताकाङ्क्षाया उपशान्तत्वात् । अग्नीषोमीयो हि सांनाय्ययागप्रकृतिको भवति तयोरुभयोरपि पशुप्रभवद्रव्यकत्वाविशेषात् । **सांनाय्यं दधिपयसी** । तत्र पशुयागः पयोयागप्रकृतिकः, साक्षात्पशुप्रभवद्रव्यकत्वात् । तथोक्तं 'सांनाय्यं वा तत्प्रभवत्वा'दिति । तस्माच्चोदकप्राप्तैस्तद्धर्मैर्निराकाङ्क्षत्वान्न पशुयागे तद्धर्माणां प्रकरणं विनियोजकं किंतु स्थानमेवेत्यभिप्रेत्याह—**औपवसथ्येऽह्नीत्यादिना** ।

एवं स्थानं निरूप्य तस्य समाख्यातः प्राबल्यमाह—**तच्च स्थानमित्यादिना** । **तच्चेति** । उक्तलक्षणलक्षितं चेत्यर्थः । तत्र तृतीये चेदं स्थितम् । 'शुन्धध्वं दैव्याय

य्यपात्राङ्गं पाठसादेश्यात्, नतु पौरोडाशिकमिति समाख्यया पुरोडाशपात्राङ्गम् ।

**is that the Cleansing Incantation is subservient, owing to Textual Commonness of Position, to the SANNAYYA-Vessels, but not owing to the Appellation PAURODĀSHIKA, to the PURODĀSHA-vessels**

---

कर्मणे ' इत्यय मन्त्र पौरोडाशिकमिति याज्ञिकै समाख्याते काण्डे पठितस्तस्य च समाख्यया पुरोडाशकाण्डोक्तानामुलूखलजुह्वादीनामपि शोधनेऽङ्गत्वमिति प्राप्ते राद्धान्त, न समाख्यया मन्त्रस्य पुरोडाशपात्राङ्गत्वम्, पदार्थयोर्भिन्नदेशस्थत्वेन सम्बन्धस्याप्रत्यक्षत्वात् । स्थानविनियोगे तु पदार्थयोर्देशसामान्यलक्षण सम्बन्ध प्रत्यक्ष एव । नच सा पदार्थयो सम्बन्धवाचिका भवति यौगिकशब्दानां द्रव्यवाचकत्वेन पदार्थसम्बन्धावाचकत्वात्, तथात्वे वा तस्या सा सम्बन्धमात्रवाचिका तद्विशेषवाचिका वा स्यात् । नाद्य । सम्बन्धोक्तौ प्रयोजनाभावात । सर्वेषां यौगिकवचसां पर्यायतापत्तेश्च । द्वितीये तु सम्बन्धविशेषस्य सम्बन्धिविशेषनिरूप्यत्वात्तयो सम्बन्धिनौ वक्तव्यौ । तथाच सम्बन्धिप्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिन्यायेन सम्बन्धप्रतिपत्तिसम्भवे तत्रापि शक्तिकल्पने गौरवात् समाख्याया सम्बन्धवाचित्वम् । तथाचोक्तम् 'सर्वत्र यौगिकै शब्दैर्द्रव्यमेवाभिधीयते । नहि सम्बन्धवाचित्व सम्भवत्यतिगौरवात्' । तथान्यच्च ' पाक तु पचिरेवाह कर्तार प्रत्ययोऽप्यत्र । पाकयुक्त पुन कर्ता वाच्यो नैकस्य कस्यचि'दिति । किञ्च पौरोडाशिकमिति समाख्यायां प्रकृति पुरोडाशमात्रमभिधत्ते, तद्धितप्रत्ययस्तु पुरोडाशस्येदमिति व्युत्पत्त्या काण्डम् । न चैतावता कृत्स्नपुरोडाशपात्राणां मन्त्रसंनिधि प्रत्यक्षो भवति किंत्वर्थापत्त्या स कल्प्यत । कथम् । शृणु, यद्युक्त संनिधिर्न स्यात्तदा शुन्धनप्रतिपादकमन्त्रस्य पौरोडाशिकसमाख्या न स्यात् । नह्यसंनिहितानामिषेत्वेत्यादिमन्त्राणामाग्नेयकाण्डसमाख्या भवति । भवति च सा संनिहितानां 'युञ्जान प्रथमं मन' इत्यादिमन्त्राणाम् । ततश्च काण्डसमाख्यया संनिधिं परिकल्प्य कल्पितसंनिधिं यथानुपपत्त्या परस्पराकाङ्क्षारूपं कृत्स्नपात्रप्रकरण कल्पयित्वा तद्द्वारा वाक्यपरिच्छिन्नश्रुतीश्च कल्पयित्वा तया श्रुत्या विनियोग इति स्थानापेक्षया विनियोगे समाख्याया विप्रकर्ष । सांनाय्यपात्राणां तु कुम्भीशाखापवित्रादीनां शोधनमन्त्रसंनिधि प्रत्यक्षो भवति । कथम् । शृणु, इध्माबर्हिसंपादनस्य मुष्टिनिर्वापस्य चान्तराले सांनाय्यपात्राणां देश उक्त । शोधनमन्त्रश्चायमिध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते । तेन च प्रत्यक्षसंनिधिना प्रकरणादीनां चतुर्णामेव कल्पनात्संनिधि समाख्यापेक्षया संनिकृष्यते । तस्मात्क्रमेण समाख्यां बाधित्वा सांनाय्यपात्राणां शोधने शेषोऽयं मन्त्रो भवतीत्यभिप्रेत्याह—**अतएवेत्यादिना** । अतएव स्थानस्य समाख्यात प्रबलत्वादेव । शुन्धनमन्त्र ' शुन्धध्वं दैव्याय कर्मणे ' इति मन्त्र । सांनाय्यपात्राङ्गमिति सांनाय्ययागयोरैन्द्रपयसो पात्राणां कुम्भीशाखापवित्रादीनामङ्गमित्यर्थ । **पाठसादेश्यादिति** । संनिधिपाठादित्यर्थ । **पुरोडाशपात्राङ्गमिति** । पुरोडाशपात्राणामुलूखलादीनामङ्गमित्यर्थ ।

( ३१ )

समाख्या यौगिकः शब्दः । सा च द्विविधा वैदिकी लौकिकी च । तत्र होतुश्चमसभक्षणाङ्गत्वम्, होतृचमस इति वैदिक्या समाख्यया । अध्वर्योस्तत्तत्पदार्थाङ्गत्वम्, लौकिक्या आध्वर्यवमिति समाख्ययेति संक्षेपः । तदेवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि ।

(31)

**Appellation is a word deriving its sense from its etymological constituents (YAUGIKA) That again is of two kinds Vedic and Worldly Of these, it is by the Vedic Appellation HOTR-CHAMASA, that the Hotr becomes subservient to the drinking of the contents of CHAMASA (cup) The ADHVARYU becomes subservient to the various details (mentioned in the ADHVARYU-KANDA) owing to the worldly Appellation ADHVARYAVA (relating to the Adhvaryu) This is a brief outline (of Appellation) Thus have been examined, in brief, the six means of proof, Statement and others**

---

एवं स्थानं निरूप्य समाख्यां लक्षयति—**समाख्या यौगिकः शब्द इति** । अत्र यौगिकशब्दत्वं लक्षणम्, समाख्येति लक्ष्यम् । **शब्दश्चतुर्धा यौगिको रूढो योगरूढो यौगिकरूढश्चेति** । तत्राद्यस्तैर पाचक इत्यादिर्यौगिक [illegible] एव समाख्येति चोच्यते । यत्रावयवार्थ एव ज्ञायते स यौगिक इति तन्निर्वचनम् । योऽवयवशक्तिनिरपेक्षया समुदायशक्त्यैवार्थं बोधयति स रूढो यथा गवादिशब्द । यस्त्ववयवशक्तिविषये समुदायशक्त्यापि प्रवर्तते स योगरूढः । यथा पङ्कजादिशब्दस्यैवावयवशक्त्या पङ्कजनिकर्तृत्वेन समुदायशक्त्या च पद्मत्वेन रूपेण पद्मबोधकत्वात् । यस्त्ववयवशक्तिसमुदायशक्तिभ्यां रूढार्थं यौगिकार्थं च स्वातन्त्र्येण बोधयति स यौगिकरूढ । यथोद्भिदादिशब्द । स चोर्ध्वभेदनकर्तृतरुगुल्मादिक बोधयति यागविशेषमपि चेति । सा, यौगिकशब्दात्मिका समाख्या । तत्र, तयो समाख्ययोर्मध्य इत्यर्थ । **होतुरिति** । भक्षणस्य क्रियात्मकत्वेन प्राधान्यात्तत्कर्तुर्होतुर्भवति तदङ्गत्वमित्यर्थ । **तत्तत्पदार्थाङ्गत्वमिति** । 'पुरोडाशं चतुर्धा करोति' इत्यादिना यजुर्वेदेन विहितानां पदार्थानामङ्गत्वमित्यर्थ । **लौकिक्येति** । याज्ञिकैः परिकल्पितयेत्यर्थ । तृतीये स्थित " प्रैतु होतुश्चमस ' इत्यत्र समाख्या भक्षहेतु । ' हरिरसि हारियोजन ' इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजन । तत्र वाक्य ' वषट्कर्तु प्रथमभक्ष ' इत्यत्र वषट्कार इत्यवमुक्तत्वात् नय एव भक्षहेतव इति प्राप्ते राद्धान्त —हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्च परेत्य सदसि भक्षान्भक्षयन्तीति श्रूयते । उत्तरवेद्या प्रतीचीने सदस प्राचीने मण्डपेऽभिषव , उत्तरवेद्यां होम', सदसि भक्षण,

( ३० )

एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य – दर्शपूर्णमासाभ्यां यजेतेत्येवंरूपेण यानि विनियोज्यन्ते तान्यङ्गानि द्विविधानि—सिद्धरूपाणि क्रियारूपाणि चेति । तत्र सिद्धानि जातिद्रव्यसंख्यादीनि । तानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि—गुणकर्माणि प्रधानकर्माणि च । एतान्येव संनिपत्योपकारकाणि आरादुपकारकाणीति चोच्यन्ते ।

(32)

The subsidiaries that are enjoined as subservient (VINIYOJITA) by an Injunction of Subservience assisted by (either of) these (means of proof)-as for instance, when it is laid down that the New and Full Moon sacrifices should be performed with (subsidiaries) like the Samidh contributing to them-are of two kinds Those that are of the form of accomplished things and those that are of the form of actions Of these accomplished things are such as Generality, Substance, Number They have only a visible purpose to serve Those that are of the form of actions are again of two kinds Minor actions ard Major actions The same are otherwise called Cumulatively Contributory and Directly Contributory ( ĀRĀDUPAKĀRAKA)

---

...रूपक्षण विधीयते । तस्मा
। श्रुत्यादिप्रमाणस्य विनि

एतैः षड्भिः प्रमाणैः सहकृतेन विनियोगविधिना यान्यङ्गानि विनियोज्यन्ते तानि विनियोगविधेः स्वरूपमनुवदन्विभजते—**एतदित्यादिना** । तत्र सिद्धरूपाणि निर्दिशति—**तत्रेति** । सिद्धरूपक्रियारूपाणां मध्य इत्यर्थः । जातिः पशुत्वादि, द्रव्यं व्रीह्यादि, संख्या एकत्वादि, तथा यागस्वरूपोपकारकत्वेन दृष्टार्थत्वमेवेत्याह—**तानि चेति** । क्रियारूपाणां विभागद्वारा लक्षणमाह—**क्रियारूपाणीत्यादिना** । गुणस्य कर्माङ्गस्य द्रव्यादेः संस्कारकाणि क्रियाविशेषरूपाणि गुणकर्माणि यथाऽवघातादीनि । प्रधानस्य फलापूर्वस्योपकारकाणि तानि प्रधानकर्माणि यथा प्रयाजादीनि । तेषामेव लक्षणान्तरमाह—**एतान्येवेत्यादिना** ।

( ३३ )

कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म संनिपत्योपकारकम् । यथाऽवघातप्रोक्षणादि । तच्च दृष्टार्थं अदृष्टार्थं दृष्टादृष्टार्थं चेति । तत्र दृष्टार्थमवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशुपुरोडाशादि । तद्धि द्रव्यत्यागांशेनैव अदृष्टं, देवतोद्देशेन च देवतास्मरणं दृष्टं करोति ।

(33)

**An action that is laid down with reference to a substance etc forming part of a sacrificial action is Cumulatively Contributory. Thrashing (of rice grains), sprinkling etc, are instances of the same Again, it, may have a visible purpose or an invisible purpose or both. Of these, that having a visible purpose is illustrated by thrashing (of rice grains) etc, That having an invisible purpose is illustrated by the sprinkling (of rice-grains) etc, That having a double purpose is illustrated by the sacrificial animal, the sacrificial cake etc. For, such an action conduces to the unseen when judged from the aspect of the offering of the substance, and to the seen viz the remembrance of the deity, when judged with reference to the deity.**

---

संनिपत्योपकारकाणां लक्षणमाह—**कर्माङ्गेत्यादिना** । यानि चाङ्गानि साक्षात्परम्परया वा विहितफलसाधनयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनि तानि संनिपत्योपकारकाणीति फलितम् । **द्रव्यादीत्या**दिना देवतादिपरिग्रहः । क्रियारूपत्वे सर्वेषां कर्मणां गुणकर्मत्वमवघातादीनां प्रधानकर्मत्वं प्रयाजादीनां संनिपत्योपकारकत्व अवघातादीनामारादुपकारकत्व प्रयाजादीनां च लक्षणमिति समुदायतात्पर्यम् । तत्रोदाहरणमाह—**यथावघातेति** । संनिपत्योपकारकाणां पुनरपि त्रिविधं विभागं करोति—**तच्चेत्यादिना** । तच्च संनिपत्योपकारकं चेत्यर्थः । दृष्टार्थमुदाहरति—**दृष्टार्थमवघातादीति** । अवघातादेस्तुषविमोकादिरूपदृष्टद्वारा यागस्वरूपतदुत्पत्त्यपूर्वहेतुत्वात्संभवति तस्य दृष्टार्थत्वमित्यर्थः । अदृष्टार्थमुदाहरति—**अदृष्टार्थमिति** । प्रोक्षणादेर्व्रीहिगतसंस्कारस्यातिशयादृष्टद्वारा प्रधानयागोत्पत्त्यपूर्वहेतुत्वात्संभवति केवलादृष्टार्थत्वं प्रोक्षणमन्तरेणापि यागस्वरूपानुपपत्त्यभावात् दृष्टोपकारासंभवात् । दृष्टादृष्टोभयार्थमुदाहरति—**दृष्टादृष्टार्थमिति** । पशुपुरोडाशादीत्यादिना यागादिसंग्रहः । **तद्धि** । पशुपुरोडाशादि हीत्यर्थः । **अदृष्टमिति** । यागोत्पत्त्यपूर्वद्वारा फलापूर्वमित्यर्थः ।

( ३४ )

द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् । यथा प्रयाजादि । आरादुपकारकं च परमापूर्वोत्पत्तावेवोपयुज्यते । संनिपत्योपकारकं तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते । इदमेव चाश्रयिकर्मेत्युच्यते । तदेवं निरूपितः संक्षेपतो विनियोगविधिः ।

(34)

An action that is laid down by itself, without reference to substance etc., is Directly Contributory. PRAYĀJA and similar actions are instances of the same. Directly Contributory action is useful for the production of the ... alone. The Cumulatively Contri- ... e form of ... or deity. ... reference ... s has been ...

आरादुपकारकाणां लक्षणमाह—द्रव्याद्यनुद्दिश्येति । आत्मसमवेतापूर्वजनकान्यारादुपकारकाणीत्यपि वदन्ति । तत्रोदाहरणमाह—यथेति । प्रयाजादीत्यादिनाऽऽघारानुयाजादिपरिग्रहः । अत्र परमापूर्वोत्पत्तावेवेत्येवकारेण द्रव्यदेवतासंस्कारजननद्वारा यागस्वरूपोपयोगित्वमारादुपकारकाणां निरस्यते । यागस्वरूपेऽपीत्यपिना संनिपत्योपकारकाणां द्रव्यदेवतासंस्कारद्वारा यागोत्पत्त्यपूर्वेऽप्युपकारकत्वं समुच्चीयते । अत्र च ... द्वारा पुरोडाशनिर्वर्तकत्वं तद्द्वारा यागशरीरनिष्पत्त्यपूर्वजनकत्वं च भवति । याज्यानुवाक्यादेर्देवतासंस्कारद्वारा यागोत्पत्त्यपूर्वं प्रत्युपयोगित्वं देवताया साक्षाद्यागशरीरनिर्वर्तकत्वं तद्द्वारा तदुत्पत्त्यपूर्वनिष्पादकत्वं च भवति । यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वाद्द्रव्यदेवते तु यागस्वरूपमित्यभ्युपगमाच्चेति ध्येयम् । इदमेव चेति । संनिपत्योपकारकमेव च न त्वारादुपकारकमित्यर्थः । आश्रयीति । द्रव्यदेवतादिरूप आश्रये उत्पत्तेराश्रयि । ... आश्रयकर्मेति ... । इदमेव गुणकर्मेत्यपि वदन्ति । किं च सामान्यतः कर्म द्विविधमर्थकर्म गुणकर्म चेति । तत्र ... कर्मार्थकर्म—यथाऽग्निहोत्रदर्शपूर्णमासप्रयाजानुयाजादिकं, ... । द्रव्यादिसंस्कारकं द्वितीयम् । इदं संनिपत्योपकारकमित्युच्यते । तदपि द्विविधमुत्पन्नस्य ... संस्कारकं चेति । तत्रावघातप्रोक्षणादिकमुत्पन्नस्य ... संस्कारकं, ... । प्रतिनिधिकर्म ... द्वितीयम् । ... अग्निसंस्कारकमित्यपि वदन्ति । ... विनियोगविधिं निगमयन्नाह—तदेवमिति ।

( ३५ )

Proximity

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चाङ्गवाक्यैकवाक्यतापन्नः प्रधानविधिरेव । स हि साङ्गं प्रधानमनुष्ठापयन्विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते । नच तद्विलम्बेऽपि प्रमाणाभाव इति वाच्यम् । विलम्बे हि अङ्गप्रधानविध्ये-

(35)

Injunction of Performance is one that conveys the proximity of performance It is no more than the Principal Injunction forming unity of statement ( EKAVĀKYATĀPANNAH ) with the Subservient Injunctions For enjoining as it does the performance of the principal along with its subsidiaries, it enjoins the proximity of ( their ) performance which is the same as ( APARAPARYĀYA ) absence of delay. It should not be argued that there is as well (API) no authority for the absence of delay in performance For, if delay were admitted, the close connexion between them (i e the principal and the Subsidiary) as understood from the unity of statement of

due to the absence of the authority enjoining delay

इदानीं प्रयोगविधिं निरूपयति—**प्रयोगेत्यादिना** । साङ्गप्रधानकर्मप्रयोगप्राशुभावबोधक इत्यर्थः । स च प्रयोगविधिः प्रयाजाद्यङ्गजातवाक्यैकवाक्यतामापन्नो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिप्रधानविधिरेवोक्तलक्षणविधित्रयमेलनरूपश्चतुर्थोऽयं विधिर्न तु विध्यन्तरमित्याह—**स चेति** । तत्र हेतुं प्रदर्शयन् प्रयोगप्राशुभावशब्दं व्याचष्टे—**स हीत्यादिना** । प्रयोगविधिः साङ्गप्रधानकर्मप्रयोगाविलम्बं विधत्ते तद्विलम्बे प्रमाणाभावात्संप्रतिपन्नवत् । तत्र प्रयोगविधिः प्रयोगविलम्बं विधत्ते तदविलम्बे प्रमाणाभावादिति सप्रतिसाधनतामाशङ्क्य समाधत्ते—**न त्वेत्यादिना** । अङ्गप्रधानविध्योरेकवाक्यतयावगतस्याङ्गप्रधानयोः साहित्यस्यानुपपत्तेरेव तदविलम्बे प्रमाणत्वात् तत्र प्रमाणाभाववचनं शोभततरामिति । तत्रार्थापत्तिं प्रमाणं दर्शयति—**विलम्ब इत्यादिना** । हिशब्देन तत्साहित्यनिश्चयं द्योतयति । प्रयाजाद्यङ्गजातमङ्गशब्दार्थः । प्रधानशब्देन च दर्शादिः प्रधानयागो ह्युच्यते । तावेव तच्छब्दार्थौ । नच तत्साहित्यमेव नास्तीति वाच्यम् । अङ्गप्रधानविध्येकवाक्यत्वानुपपत्तेः, तस्य प्रयोजनान्तरानुपलब्धेश्च । नन्वविलम्बमन्तरेण नाङ्गप्रधानयोः साहित्यानुपपत्तिः, तेन विनापि तथा व्यवहारादित्याशङ्क्य नैवमित्याह—**विलम्बेनेत्यादिना** । पूर्वेऽह्नि परेऽह्नि च क्रियमाणयोर्भोजनयोरिदमनेन भोजनेन सहकृतमिति व्यवहारादर्शनाच्च

कवावयतावगततत्साहित्यानुपपत्तिः । विलम्बेन क्रियमाणयोः पदार्थयोरिदमनेन सहकृतमिति साहित्यव्यवहाराभावात् । स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति । अन्यथा हि किमेतदनन्तरमेतत्कर्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः । अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते ।

the Subservient and the Principal Injunctions will be unaccounted for, since the usage of close connexion–This one is closely connected with this other–is absent between things that are performed delayedly. That absence of delay, again, follows when a definite order is resorted to For, otherwise, there will arise distraction in performance, as to whether a particular thing should be performed after another or after a third Hence the Injunction of Performance itself enjoins, *in order to bring about the proximity of performance* it wants to lay down, a definite order also *by way of an attribute of things* *Therefore it is that* the Injunction of Performance is also defined as the injunction

---

विलम्बेन क्रियमाणयोरङ्गप्रधानयोः साहित्यव्यवहारोऽभ्रान्तस्योपपद्यते ततश्च सा तदवस्थेत्यर्थः । सोऽप्यङ्गप्रधानयोरविलम्बस्तु नियतक्रमस्य प्रयोगे संभवति यथाग्नेयहविरभिघारणं, ततश्चैन्द्रदधिहविरभिघारणं, तत आग्नेययागानुष्ठानं, तदनन्तरमैन्द्रदधियागानुष्ठानमिति नियतः क्रमः । ततश्च कालान्तरितव्यवधानेनाविलम्ब इति सर्वमुपपद्यतेऽस्यामवस्थायामित्यभिप्रेत्याह—स चेत्यादिना । क्रमानङ्गीकारे दोषमाह—अन्यथेत्यादिना । प्रयोगविक्षेपापत्तेरिति । किमाग्नेयहविषोऽभिघारणानन्तरमैन्द्रदधिहविरभिघारणानन्तरं कर्तव्यं किं वैन्द्रदधिहविषोऽभिघारणमाग्नेयहविरभिघारणानन्तरमित्येवं सर्वत्र संदेहेन यागानुष्ठानोच्छेदापत्तेरित्यर्थः । 'मैत्रायणी विन द्यते' इत्यादिना भगवद्वचनेन [illegible] प्रयोगसाधनेऽपि प्रयुज्यमानेऽव्यवधानमैदिहानस्यानुष्ठानप्रयोगसाधने प्राशिष्टसाधन इति भावः । ननु नाङ्गप्रधानयोर्यत्र क्रम उपपद्यते तद्विधायकाभावात् । न च प्रयोगविधिरेव तद्विधायको वाक्यभेदापातात् कथं न प्रयोगविधिरेव प्रयोगप्राशुभावविधायकत्वे गुणप्रधानयोर्नियतक्रमविधायकत्वं च वाक्यभेदापातात् इति चेन्मैवमित्याह—अत इत्यादिना । यतोऽङ्गप्रधानयोर्नियतक्रममन्तरेणाविलम्बापरनामधेयप्रयोगप्राशुभावो नोपपद्यते अतः स्वविधेयप्रयोगप्राशुभावनिष्पत्त्यर्थं नियतं क्रममपि प्रयोगविधिरेव विधत्त इत्यर्थः । वाक्यभेदनिरासाय पदार्थविशेषणतयेत्युक्तं व्यापारभेदेन हि विधाने वाक्यभेदो भवति न तु विशिष्टविधाने इत्यतोऽत्रोक्तमाह । पदार्थधर्मत्व क्रियाक्रमो क्रम,

अतएवाङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम् । तत्र क्रमो नाम विततिविशेषः, पौर्वापर्यरूपो वा ।

(३६)

तत्र षट् प्रमाणानि श्रुति–अर्थ–पाठ–स्थान–मुख्य–प्रवृत्त्या–ख्यानि ।

**that teaches the order of the subsidiaries ( of a sacrifice ) There, (in this second definition) Order means a particular extension, or rather, it is, in nature, the relation of Priority and Posteriority**

**( 36 )**

**For establishing it ( *i. e.* order ), there are six means of proof: Statement, Purpose, Text *Serial m*, Juxtaposition, ( Order of ) the Principals and ( Order in ) Continual Performance.**

---

अन्यथा क्रमविधानानुपपत्तेः । तदुक्तं माधवेन—'यद्यपि क्रमस्य क्रियात्वाभावात्स्वरूपेण न विधियोग्यता तथापि दध्ना जुहोतीत्यादावक्रियारूपं दधिद्रव्यं यथा क्रियाविशेषणं सद्विधीयते दधिसाधनकं होमं कुर्यादिति, एवमनेन क्रमेण कर्तव्यमिति क्रियाविशेषणतया क्रमो विधीयता'मिति । यत प्रयोगविधिरेव पदार्थविशेषणतया तन्नियतक्रममपि विधत्तेऽतएव कारणात्तस्य लक्षणान्तरमपीत्याह—**अतएवेति** ।

ननु क्रमबोधक इत्यत्र किंलक्षणः क्रमोऽभिमत इत्याकाङ्क्षायां क्रमं लक्षयति—**तत्र क्रम इति** । यद्वा वाक्यार्थबोधे पदार्थज्ञानस्य हेतुत्वात्क्रमपदार्थज्ञानमन्तरेण प्रयोगविधिलक्षणवाक्यार्थबोधो न स्यात्तस्य क्रमपदार्थो वक्तव्य इत्याकाङ्क्षायां क्रमलक्षणमाह—**तत्र क्रम इति** । तत्र, प्रयोगविधिलक्षणवाक्यार्थघटकपदार्थानां मध्य इत्यर्थः । विततनं वितानं वा विततिः । 'तनु विस्तारे' इति धातोः स्त्रियां भावे क्तिन्प्रत्यये विततिरिति रूपम् । तथाच बहुभिः कर्तृभिर्युगपत्कृतानामपि पदार्थानां वितानविशेषो भवत्येव ननु तत्र क्रमव्यवहार इत्यरुच्या लक्षणान्तरमाह—**पौर्वापर्यरूपो वेति** । यद्वा युगपत्कृतानां क्रमेण कृतानां वा पदार्थानां वितानविशेषेऽपि विशेषपदसूचितं पौर्वापर्यरूपं विवक्षितं लक्षणार्थं लक्षणान्तरव्याजेन वाशब्दमनास्थायां निश्चयार्थं वा मत्वा प्रकटयति—**पौर्वापर्यरूपो वेति** । तदुक्तं, तत्तत्पदार्थानन्तरं तत्तत्पदार्था इत्येवमनेकपदार्थगतपौर्वापर्यसमुदायरूपविततिरेव क्रम इति । तन्नियमे च षट् प्रमाणानि श्रुत्यादीनि भवन्तीत्याह—**तत्रेति** । तत्र, क्रम इत्यर्थः ।

( ३७ )

तत्र क्रमपरवचनं श्रुतिः । तच्च द्विविधम् । केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति । तत्र 'वेदं कृत्वा वेदिं करोती'( आपस्तम्ब श्रौ सू ७ ३ १० )ति केवलक्रमपरं, वेदिकरणादेर्वचनान्तरप्राप्तत्वात् । 'वषट्कर्तुः प्रथमभक्षः' ( आप श्रौ सू १२-२४-६ ) इति तु क्रमविशिष्टपदार्थपरम् । एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् ।

( 37 )

Of these, Statement is a text specifying order It is *of two kinds* that *specifying pure sequence* and that specifying a matter qualified by that ( *i* = sequence ) Of them, Statement of pure Sequence is illustrated by "One should prepare the Sacrificial altar after preparing the Veda," for the preparation etc of the altar is established (already ) by a different text *But the statement'* "The *first* draught pertains to the VASHAT-KARTR" specifies a Thing *Qualified by Sequence, in view of the impossibility* of laying down, with a repetition of draught pure sequence, for fear of violating the unity of the particular idea (PRASARA)

---

तत्र श्रुतिं लक्षयति—तत्रेति । तत्र, षट्सु प्रमाणेषु मध्ये इत्यर्थः । क्रमपरवचनम्, इत्यत्र क्रमबोधकः, क्रमशब्द इत्यर्थः । तच्चाथशब्दादिरूपम् । तत्राथशब्दस्यानन्तर्यवाचित्वं शक्त्यैव । क्त्वाप्रत्ययादीनां तु पूर्वकालादिवाचिनामपेक्षानुरोधात्क्रमपरत्वं लक्षणया, अर्थादिषु कल्प्यशब्दस्यैव क्रमबोधकत्वात् क्लृप्तेति विशेषणम् । श्रुतिं विभजते—तच्चेति । क्रमपरवचनं चेत्यर्थः । तत्र केवलक्रमपरं वचनमुदाहरति—तत्रेत्यादिना । तत्र, तयोर्द्वयोर्मध्ये इत्यर्थः । वेदः दर्भमुष्टिविशेषः । वेदिः आहवनीयगार्हपत्ययोर्मध्ये चतुरङ्गुलं निखातं भूतलं हविर्निधानस्थानविशेषरूपम् । तस्य केवलक्रमपरत्वे हेतुमाह—वेदीत्यादिना । दर्शपूर्णमासयोर्हि विधिवाक्येनोत्तरं वेदिकरणविधिवाक्येनैव वेदिकरणस्य प्राप्तत्वात्तदनुवादेन क्त्वाप्रत्ययोक्तक्रममात्रमत्र विधीयत इति भावः । अत्र क्त्वाप्रत्ययोक्तस्य क्रमस्य वाक्यादेव वेदिकरणादेश्च तत्त्वेनैव तद्विधिरिति बोध्यम् । क्रमविशिष्टपदार्थपरं वचनमुदाहरति—वषट्कर्तुरिति । ननु भक्षस्य कथंचित्प्राप्तिकत्वसंभवात्प्रथमशब्दोक्तक्रममात्रस्यात्रापि विधानं भविष्यतीत्याशङ्क्य तत्र हेतुमाह—एकेत्यादिना । तथा च प्राथम्यविशिष्टभक्षपदार्थप्रसरभावस्य विशिष्टोपस्थितिरूपस्य भङ्गभिया न क्रममात्रं विधातुं शक्यते । अन्यथा यो वषट्कर्तुर्भक्षः स प्रथम इत्युपस्थितिः स्यान्न तु वषट्कर्तृत्वोपाधिविशिष्टस्याप्यभिन्नं प्राथम्यविशिष्टभक्ष इति भावः । यद्वा एकप्रसरता

( ३८ )

सेयं श्रुतिरितरप्रमाणापेक्षया बलवती । तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् । अतएवाश्विनग्रहस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तौ आश्विनो दशमो गृह्यत ( मैत्रायणी सं ४-६-१ ) इति वचनाद्दशमस्थाने ग्रहणमित्युक्तम् ।

( ३९ )

यत्र प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः । यथा 'अग्निहोत्रं

( 38 )

This Statement is stronger than the other means of proof For, the latter become authoritative as regards order on the basis of the supposition of a (corresponding) text, That is why it is said that the cup to the As'hvins should be taken in the tenth place, on the strengh of the text, "The one in honour of the As'hvins is offered (GRAH) in the tenth place," when there was the contingency of it being offered in the third place in virtue of its serial place in the text

( 39 )

Order by Purpose exists in cases where the sequence is determined on the basis of the purpose ( served by the matters in question ) An instance is ( the order observed) ( in the performance of ) Agnihotra and the preparation of

---

भङ्ग एकवाक्यताभङ्गो बोध्य । भक्षस्याप्यनेनैव विधानाभ्युपगमात् । तथा चानेन विहितभक्षानुवादेन प्रथमशब्दोपात्तक्रमविधाने एकवाक्यताभङ्गेनावृत्त्यात्मको वाक्यभेदः स्यादिति भाव । अत्रापि क्रमविशिष्टभक्षविधानात्प्रथमपदोपात्तक्रमस्य वाक्याद्भक्षाङ्गत्वमिति ध्येयम् ।

इदानीमुक्तश्रुतेरर्थपाठादिप्रमाणापेक्षया प्राबल्यमाह—**सेयं श्रुतिरिति** । अर्थादिप्रमाणानां श्रुतिकल्पनद्वारा क्रमे प्रामाण्यादिति तत्र हेतुमाह—**तेषामित्यादिना** । ज्योतिष्टोमे ऐन्द्रवायवादिग्रहेष्वाश्विननामकग्रहस्तृतीयस्थाने पठितः । ततश्च तृतीयस्थाने ग्रहणप्रसक्तावपि तस्य दशमस्थानत्वमाश्विनो दशमो गृह्यत इति शब्देनाम्नायत इति तत्र गमकमप्याह—**अतएवेत्यादिना** । अतएव, इतरप्रमाणापेक्षया श्रुतेः प्राबल्यादेवेत्यर्थः । **इत्युक्तमिति** । पञ्चमाध्याये चतुर्थपादस्य प्रथमाधिकरण इति शेषः । पाठो हि न क्रमस्याभिधायकः किन्त्वन्यथानुपपत्त्या क्रमं कल्पयति । दशम इत्येषा श्रुतिस्तु साक्षादेव क्रममभिधत्ते । ततः पाठादपि श्रुतिः प्रबलेति भावः ।

इदानीमर्थक्रमं लक्षयति—**यत्रेत्यादिना** । प्रयोजनवशेन प्रयोजनानुपपत्त्या, तद्धि व्युत्क्रमेऽनुपपद्यमानं क्रमे प्रमाणमिति भावः । तत्रोदाहरणमाह—**यथाग्निहोत्रमिति** । अग्निहो-

जुहोति', 'यवागूं पचती' (तै. ब्रा. २-१-५-६?) त्यग्निहोत्रयवागूपाकयोः । अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते ।

(४०)

स चायं पाठक्रमाद्बलवान् । यथापाठं ह्यनुष्ठाने दृष्टप्रयोजनबाधो-ऽदृष्टार्थत्वं च स्यात् । नहि होमानन्तरं क्रियमाणस्य पाकस्य किंचिद्दृष्टं प्रयोजनमस्ति ।

barley-gruel, in reference to the injunctions: "One should offer Agni-hotra" & "One should cook the barley-gruel". For, here the barley-gruel is intended for the sacrifice (Agni-hotra) and as such, in virtue of the purpose it is to serve, its preparation precedes (the performance of the Agni-hotra).

(40)

This (Order by Purpose) is stronger than the Order by Text *Śruti*m. For, if the acts are performed in the order in which they are stated, there will result, (in some cases,) the annulment *of their intended purpose* and they will have been performed for an unseen result. Since, the preparation (of the barley-gruel), if undertaken after the sacrifice (Agni-hotra), will have no visible purpose to serve.

[illegible]

(४१)

पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः । तस्माच्च पदार्थानां क्रम आश्रीयते । येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति । यथाप्रत्ययं च पदार्थानामनुष्ठानम् । स च पाठो द्विविधः—मन्त्रपाठो ब्राह्मणपाठश्चेति ।

(४२)

तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्यानां पाठाद्यः क्रम आश्रीयते स मन्त्रपाठात् । सचायं मन्त्रपाठो ब्राह्मणपाठाद्बलीयान्, अनुष्ठाने

(41)

The order in which the sentences conveying different matters ( relating to sacrifice ) are given is Order by Text *Seriatim.* And on the basis of it the order of ( such matters ) is resorted to For, sentences, when read, produce an apprehension of their sense in the same order in which they are stated. And matters are performed as they are apprehended Text *Seriatim* is of two kinds: Mantra-text and Brāhmana-text.

(42)

Of these the order adopted in the performance of the sacrifices in honour of Agni and Agni-Soma, on the basis of the text of their respecive Yājyās and Anuvākyās is in accordance with Mantra-text This Mantra-text is again stronger than Brāhmana-text, being more vitally connected with the performance ( of the sacrifice ) than

---

पाठक्रमं लक्षयति—**पदार्थेति** । **तस्माच्चेति** । पाठक्रमाच्चेत्यर्थः । पाठक्रमात्पदार्थक्रममुपपादयति **येनेत्यादिना** । वाक्यानीति पदस्याप्युपलक्षणम् । पदार्थप्रत्ययस्य कोऽत्रोपयोग इत्यत आह—**यथाप्रत्ययं चेति** । पाठक्रमं विभजते—**सच पाठो द्विविध इति** ।

मन्त्रपाठक्रममुदाहरति **तत्रेत्यादिना** । तत्र मन्त्रपाठब्राह्मणपाठयोर्मध्य इत्यर्थः । किंच अग्नीषोमीययागस्तैत्तिरीयब्राह्मणपञ्चमप्रपाठके द्वितीयानुवाके समाम्नातः—'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छ'दिति । आग्नेययागस्तु षष्ठप्रपाठके तृतीयानुवाके आम्नातः—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती'ति । तत्रानुष्ठानस्य ब्राह्मणोक्तविध्यधीनत्वादग्नीषोमीयस्य प्रथममनुष्ठानमित्याशङ्क्य मन्त्रकाण्डे पूर्वं पठिता आग्नेयमन्त्राः ।

ब्राह्मणवाक्यापेक्षया मन्त्रपाठस्यान्तरङ्गत्वात् । ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदं कर्तव्यमिति अवबोध्य कृतार्थम् । मन्त्राः पुनः प्रयोगकाले व्याप्रियन्ते, अनुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् । तत्क्रमस्य च मन्त्रक्रमाधीनत्वाद् अन्तरङ्गोऽयं मन्त्रपाठ इति । प्रयाजानां 'समिधो यजति', 'तनू-

the Brāhmana- text For a Brahmana sentence, standing aloof from the performance, has its function fulfilled as soon as it has conveyed that a particular thing is to be done The Mantars, on the other hand, are employed at the time of performance, owing to the order of performance depending upon the order in which the things are remembered The order of PRAYĀJAS which is based upon the order of their text –"One should sacrifice to the SAMIDHS," "One should sacrifice to TANŪNAPAT,"

---

तथाहि होतृकाण्डे आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथमम् "अग्निर्मूर्धा" इत्यादिके आग्नेयौ याज्यानुवाक्ये आम्नाते । तत 'प्रजापते न त्वदेतानी'त्यादिके प्राजापत्ये । ततोऽ'ग्नीषोम सवेदसे' इत्यादिके अग्नीषोमीये । आध्वर्यवे काण्डेऽप्यग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्यामित्याग्नेयः पूर्वमाम्नातः । याजमानकाण्डेऽप्यग्नेरहं देवयज्ययान्नादो भूयासमित्याग्नेयस्य पश्चाद् "अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयास" मित्याम्नायते । मन्त्रक्रम प्रबल मन्त्रैः स्मृत्वा पश्चादनुष्ठेयत्वं ब्राह्मणपाठस्याप्राप्तपदार्थं विधिनापि चरितार्थं । अतोऽनुष्ठानस्मरणार्थमेव स्वनाम्नानुबाधितुं नालमिति मन्त्रक्रमेणाग्नेयस्यैव प्रथममनुष्ठानमिति समाधानमभिप्रेत्य वा मन्त्रपाठस्य ब्राह्मणपाठाद्बलीयस्त्वमाह–सचायमित्यादिना । किंच पाठयोस्तु मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान्, ननु ब्राह्मणपाठ तस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकत्वमन्त्रविधयैव क्रमनियामकत्वोक्तेर्मन्त्रसत्त्वे च तस्यैव स्मारकतया विधानोपयुक्तस्यासमर्थस्य ■ विधे स्मारकत्वाभावात् मन्त्रपाठक्रम एव बलीयान् । तेन च याज्यानुवाक्यादिमन्त्रपाठक्रमादाग्नेयस्य प्रथमानुष्ठानं पश्चाच्चोपांशुयाजोत्तरमग्नीषोमीयस्य, ननु ब्राह्मणपाठक्रमादग्नीषोमीयस्य प्रथमं, पश्चादुपांशुयाजोत्तरमाग्नेयस्येत्यभिप्रेत्य मन्त्रपाठस्य ब्राह्मणपाठाद्बलीयस्त्वमाह––सचायमित्यादिना । याज्यानुवाक्ययानामिति । यजेति प्रैषानन्तरमृग् या ब्रह्मणा समुच्चार्यते सा याज्येत्युच्यते । अनुब्रूहीति प्रैषानन्तरमृग् या तेनैव समुच्चार्यते सानुवाक्येत्युच्यत इत्यर्थः । तस्य तद्बलीयस्त्वे हेतुमाह—अनुष्ठान इत्यादिना मन्त्रपाठस्य ब्राह्मणपाठादनुष्ठानेऽन्तरङ्गत्वमुपपादयति–ब्राह्मणवाक्यमित्यादिना । स्मरणक्रमाधीनत्वादिति । अनुष्ठेयपदार्थस्मरणक्रमाधीनत्वादित्यर्थः । तत्क्रमस्येति । अनुष्ठेयपदार्थस्मरणक्रमस्येत्यर्थः । मन्त्रक्रमाधीनत्वादिति । अनुष्ठेयपदार्थस्मारकमन्त्रक्रमाधीनत्वादित्यर्थः । प्रयाजानामनुष्ठानक्रम ' समिधो यजति, तनूनपात यजति, इडो यजति,

'नपातं यजति' (तै. सं. २-६-१-१) इत्येवंविधपाठक्रमाद्यः क्रमः स ब्राह्मणपाठक्रमात्। यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि तथापि प्रयाजादीनां क्रमस्मारकान्तरस्याभावात्तान्येव क्रमस्मारकत्वेन स्वीक्रियन्ते।

(४३)

स्थानं नामोपस्थितिः। यस्य हि देशे योऽनुष्ठीयते, तत्पूर्वतने पदार्थे कृते, स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम्।

is in accordance with Brāhmana-text Though the Brāhmana sentences have their purpose fulfilled as soon as they have enjoined a certain thing, still, in the case of PRAYAJAS and others, as there is no other order-reminding agency, they (i e the Brāhmana sentences) themselvs are admitted as reminders of order

(43)

Juxtaposition is position in proximity For, it is just reasonable to perform a thing first because it alone presents itself first on performing another which (usually) precedes it, when in it region a set of things (YAH) along

---

बर्हिर्यजति, स्वाहाकारं यजतीति' ब्राह्मणपाठक्रमात्स्वीक्रियत इत्याह--**प्रयाजानामित्यादिना**। ननु 'समिधोऽग्न आज्यस्य व्यन्तु' इत्यादिमन्त्राणां प्रयाजक्रमस्मारकाणां सत्त्वेन कथं तेषां ब्राह्मणवाक्यक्रमात्क्रमः स्वीक्रियते, तद्वाक्यानां विधानमात्रे चरितार्थत्वादित्याशयेनाशङ्कते--**यद्यपीति**। मन्त्रपाठस्यान्यादृशत्वेन वा, मन्त्राणां देवतामात्रस्मारकत्वेन कर्मस्मारकत्वाभावाद्वा, प्रयाजक्रमो ब्राह्मणपाठक्रमादेवेत्याशयेन परिहरति--**तथापीति**। तथाच येन क्रमेण ब्राह्मणवाक्यान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयन्तीति युक्तं तेषां तेनैव क्रमेणानुष्ठानमिति भावः। वस्तुतस्तु प्रयाजक्रमो न ब्राह्मणपाठक्रमात्स्वीक्रियते 'समिधोऽग्न आज्यस्य व्यन्तु' इत्यादिभिः क्रमप्रकरणप्राप्तैर्मन्त्रैर्देवता गुणत्वेन समर्प्यन्त इति नवमतन्त्ररत्ने विरोधप्रसङ्गात्। अन्यथा मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्त्यापत्तेः। किंतु मन्त्रपाठक्रमात्क्रम एव, ब्राह्मणपाठक्रमात्क्रमस्तु यत्रार्थस्मारका मन्त्रा न सन्त्येव तेषामेव यथा तूष्णीं विहितानां कर्मणां क्रमो ब्राह्मणपाठक्रमाद्भवति। तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वात्। प्रयाजोदाहरणं तु कृत्वाचिन्तया, तत्र ब्राह्मणवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावात्। तथाचार्थवादपादे वार्तिकवचनम् 'प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्त' इति, तस्मान्मन्त्रक्रमादेव प्रयाजक्रम इति सिद्धमिति ध्येयम्।

इदानीं स्थानं लक्षयति--**स्थानं नामोपस्थितिरिति**। प्रकृतौ नानादेशानां पदार्थानां विकृतौ चोदकवचनादेकस्मिन्देशेऽनुष्ठाने कर्तव्ये यस्य देशे तेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठान-

अतएव साद्यस्के-अग्नीषोमीय-सवनीया-नुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्तव्ये आदौ सवनीयपशोरनुष्ठानमितरयोः पश्चात् । तस्मिन्देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितिः ।

( ४४ )

तथाहि ज्योतिष्टोमे त्रयः पशुयागाः अग्नीषोमीयः सवनीय आनुबन्ध्यश्चेति । ते च भिन्नदेशाः—अग्नीषोमीय औपवसथ्येऽहि, सवनीयः

with this other is performed Hence it is that in the SADYASKRA, when the sacrifices of the AGNĪSHOMĪYA, SAVANĪYA and ANUBANDHYA animals are performed together in the region of the SAVANIYA, the sacrifice of the SAVANIYA animal takes place first and that of the other two afterwards In that region it is the SAVANĪYA sacrifice that presents itself first on the conclusion of the taking of the cup to the As'hvins.

( 44 )

To explain In JYOTISHTOMA, three sacrifices are to be performed —the AGNISHOMIYA the SAVANĪYA and the ANUBANDHYA Again, they have different regions. The AGNĪSHOMĪYA (is performed) on the AUPAVASATHYA Day the SAVANIYA at the time of the pressing (of

मितरयोस्तु पश्चादस्य य क्रम स स्थानक्रम । तेन चोपस्थितिविशेषेण योऽनुष्ठानक्रम स एव स्थानक्रम इत्युच्यत इति भाव । उपस्थितिं व्यनक्ति—**यस्येत्यादिना । यस्येति ।** ज्योतिष्टोमादिप्रकृत साद्यस्कादिविकृतौ चादकप्राप्तस्य सवनीयादेरित्यर्थ । **य इति ।** अग्नीषोमीयानुबन्ध्यादिरित्यर्थ । **तत्पूर्वतन इति ।** तस्मात्सवनीयादे पूर्वतन आश्विनग्रहणादौ पदार्थे कृते सतीत्यर्थ । **स एवेति ।** सवनीयादिरेवेत्यर्थ । **प्रथममिति ।** अग्नीषोमीयानुबन्ध्यापेक्षया प्रथममित्यर्थ । **तस्येति ।** सवनीयादेरेवेत्यर्थ । **अतएवेति ।** प्रथमोपस्थित-प्रथमानुष्ठानस्य युक्तत्वादेवेत्यर्थ । **इतरयोरिति ।** अग्नीषोमीयानुबन्ध्ययोरित्यर्थः । **तस्मिन्देश इति ।** त्रयाणामपि पशूनां विकृतौ प्राप्तसवनीयदेश इत्यर्थ । आश्विनग्रहणानन्तरमित्यत्र सवनीयस्यैव विकृतौ प्रधानप्रत्यासत्तिवलाच्चोदकप्राप्तत्वेनोपस्थितियोग्यत्वादिति शेष । **प्रथममिति ।** अग्नीषोमीयानुबन्ध्यापेक्षया प्रथममित्यर्थ । विकृतावाश्विनग्रहणानन्तरमेव सवनीयस्थानप्रदर्शनाय प्रथम प्रकृतौ तत्स्थान प्रदर्शयति—**तथाहीत्यादिना ।** औपवसथ्येऽह्नीत्युत्कार्थ एव । **अन्त इति ।** मध्याह्नादूर्ध्वकाल इत्यर्थ । **अव्यक्तत्वादिति ।** स्वार्थचोदितदेवतार-

सुत्याकाले, आनुबन्ध्यस्त्वन्ते । साद्यस्क्रो नाम यागविशेषः । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः । अतस्ते त्रयोऽपि पशुयागाः साद्यस्क्रे चोदकप्राप्ताः । तेषां च तत्र साहित्यं श्रुतं 'सह पशूनालभेत' ( कात्यायन श्रौ. सू. २२-३-२८ ) इति । तच्च साहित्यं सवनीयदेशे, तस्य प्रधानप्रत्यासत्तेः, स्थानातिक्रमसाम्याच्च । सवनीयदेशे ह्यनुष्ठानेऽग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति प्रधानप्रत्यासत्तिलाभश्च ।

**Soma), while the ANUBANDHYA (is performed) at the end. SĀDYASKRA is a particular sacrifice. It is a derivative of the JYOTISHṬOMA on account of its tacitness. Eventually, all the three animal-sacrifices obtain in the SĀDYASKRA by the Rule of Application by Protraction (CHODAKA). But (CHA), it has been expressly stated (S'HRUTAM) that they should be performed *together*. Their performance together takes place in the region of the SAVANĪYA, since, it is in close proximity with the principal event (*i.e* Pressing of Soma) and because the *transgression of places is equal. For, if* the sacrifices take place on the SAVANĪYA Day, the AGNĪSH-OMĪYA and the ANUBANDHYA transgress only their own places and there results their close proximity to the principal event. If, on the other hand, the sacrifices of the three were to take place in the region of the**

---

हितत्वादित्यर्थः । तदुक्तं न्यायप्रकाशे 'अव्यक्तत्वं च स्वार्थचोदितदेवताराहित्य' मिति । **अत इति** । ज्योतिष्टोमविकारत्वादित्यर्थः । **तत्रेति** । साद्यस्क्र इत्यर्थः । **तच्चेति** । श्रुतं चेत्यर्थः । **तस्येति** । सवनीयस्येत्यर्थः **प्रधानेति** । तथा प्रकृतिभूते ज्योतिष्टोमे सुत्याकालिकः सवनीयः प्रधानप्रत्यासन्नस्तथैव तद्विकृतिविशेषे साद्यस्क्रेऽपि तात्कालिकः स प्रधानप्रत्यासन्न एवेति भावः । सवनीयदेशे साहित्ये त्रयाणां स्वस्वस्थानातिक्रमसाम्यं हेत्वन्तरमाह— **स्थानेति** । तदेव स्वस्वस्थानातिक्रमसाम्यं प्रदर्शयति— **सवनीयदेश**—इत्यारभ्य **तथा-चेति** प्राक्तनेन ग्रन्थेन । **स्वस्वस्थानातिक्रमो भवतीति** । यथा प्रकृतौ तथैव विकृतावपि चोदकप्राप्तस्याग्नीषोमीयस्यौपवसथ्याह्नोरप्यस्य स्वस्थानमात्रस्यातिक्रमो भवत्यानुबन्ध्यस्य च स्वान्तस्थानमात्रस्यातिक्रमो भवतीत्यर्थः । सवनीयस्य च सुत्याकालरूपस्वस्थानस्य नातिक्रमो भवतीत्यत्र लाघवमिति भावः । **इति त्रयाणां स्वस्वस्थानातिक्रम इति** । अग्नीषोमीयस्य देश औपवसथ्योऽह्नि सर्वेषामनुष्ठानेऽग्नीषोमीयस्य सवनीयप्रधानसोमप्रत्यासत्तिव-

अग्नीषोमीयदेशे त्वनुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रम् । अनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च स्यात् । एवमनुबन्ध्यदेशेऽग्नीषोमीयस्य द्रष्टव्यः स्थानातिक्रमः ।

तथाच सवनीयदेशे सर्वेषामनुष्ठाने कर्तव्ये सवनीयस्य प्रथममनुष्ठानम् । आश्विनग्रहणानन्तरं हि सवनीयदेशः । प्रकृता "आश्विनग्रहं कृत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति"

AGNISHOMIYA, the SAVANIYA will tranasgress only its own place The ANUBANDHYA, on the other hand, will transgress its own place as well as that of the SAVANIYA Similar it should be seen is the transgression of places by the AGNISHOMIYA if (the sacrifices take place) in the region of the ANUBANDHYA

Thus, when the sacrifices of all (the three) have to be performed in the region of the SAVANIYA, the SAVANIYA has to be sacrificed first For immediately on offering the Cup of the Ashvins, comes the place of the SAVANIYA As in the archetype the SAVANIYA has been laid down immediately after the offering of the Cup of the Ashvins by the injunction, "*He should touch the SAVANIYA animal*

---

छात्साद्दितीयविधिप्राप्तप्रुत्याकालरूपसवनीयस्थानरूपस्वस्थानातिक्रमो भवति । आनुबन्ध्यस्य तु तादृशसवनीयस्थानरूपस्वस्थानातिक्रम स्वीयान्तस्थानातिक्रमो भवतीति त्रयाणां स्वस्वस्थानातिक्रम । आनुबन्ध्यस्य देशे तु तेषामनुष्ठानेऽग्नीषोमीयस्यौपवसथ्याहोरूपस्य स्वस्थानस्यातिक्रमस्तादृशसवनीयस्थानरूपस्वस्थानस्यातिक्रमश्च भवति । आनुबन्ध्यस्य तु निरुक्तसवनीयस्थानरूपस्वस्थानस्यातिक्रम सवनीयस्य तु स्वस्थानमात्रस्यातिक्रमश्च भवतीति त्रयाणां स्वस्वस्थानस्यातिक्रम इत्यर्थ । **तथाचेति** । उक्तयुक्त्या सवनीयदेशे त्रयाणामनुष्ठाने कर्तव्ये चेत्यर्थ । वैकृतसवनीयस्थाननिर्णयोपायतया प्राकृतं सवनीयस्थानं श्रुत्या प्रदर्शयति—**प्रकृतावित्यादिना** । त्रिवृता त्रिगुणितरज्ज्वा परिवीय परिवेष्टन कृत्वा आश्विन सोमग्रहतद्ग्रहणानन्तरं ज्योतिष्टोमे सवनीयो विहित इति भाव । **इति** । यत प्रकृतावाश्विनग्रहणानन्तर स विहितोऽतोऽहेतोरित्यर्थ । **आश्विनग्रहणेति** । अत्राप्याश्विनग्रहणान्तरमेव तस्य चोदकप्राप्तत्वेन तदनन्तरमेव तदुपस्थितिरिति भाव । **तस्येति** । सवनीयस्येत्यर्थ । **स्थानादिति** । उपस्थितेरित्यर्थ । **इतरयोरिति** । अग्नीषोमीयानुबन्ध्ययोरित्यर्थ । **ननु** तयो पश्चादनुष्ठानेऽपि

( शतपथ ब्रा ४-२-५-१२ ) त्वाश्विनग्रहणानन्तरं सवनीयो विहित इति साद्यस्क्रेऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवति । अतो युक्तं तस्य स्थानात्प्रथममनुष्ठानमितरयोस्तु पश्चादित्युक्तम् ।

( ४४ ) अ

प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः । येन हि क्रमेण प्रधानानि क्रियन्ते तेनैव क्रमेण तेषामङ्गान्यनुष्ठीयन्ते चेत् तदा सर्वे-

after offering the Cup of the As'hvins, and after passing three coils of thread round the sacrificial post," so in the SĀDYASKRA also after the Cup of the As'hvins is taken, it is the SAVANĪYA sacrifice that presents itself immediately, hence it is proper, as it has been said, to perform its sacrifice first and that of the other two afterwards

( 44 ) A

The order of the subsidiaries according to the order of the principals is known as the Order of the Principals For, if the subsidiaries are performed in the same order in which the principals are performed, all the subsidiaries will be separated from their principals by equal distance

---

कस्य प्रथममनुष्ठानं कस्य पश्चादित्यनिर्णये प्रयोगविक्षेपापत्तिरित्यत आह-**उक्तमिति** । पञ्चमा ध्यायस्य प्रथमे पाद इति शेष । तत्र हि स्थानात्सवनीयस्य प्राथम्ये निश्चिते स्थानभ्रष्टयोस्तयो रग्नीषोमीयस्य प्रथममनुष्ठानमानुबन्ध्यस्य पश्चादित्युक्तमित्यर्थ । उक्त हि न्यायमालाविस्तरे-- साद्यस्क्रनामक कश्चित्सोमयाग तत्र श्रूयते सहपशूनालभत इति । प्रकृतावग्नीषोमीयपशुरौपव सथ्ये दिने आलभ्यते, सवनीयपशु ■ यादिने प्रात सवन आश्विनग्रहादूर्ध्वमालभ्यते, आनुबन्ध्य पशुरवभृथादूर्ध्वमालभ्यते, इह तु त्रयोऽपि पशव सहालब्धव्या । सोऽय सहालम्भ सुत्यादिन आश्विनग्रहादूर्ध्वे सवनीयस्थाने भवतीत्येतदवश्यमभ्युपेतव्य, तथासति प्रधानसोमप्रत्यासत्ति लाभादिति । सवनीयो हि स्वस्थान एव वर्तते आश्विनग्रहसमापस्य सवनीयस्थानत्वात् । आश्विने गृहीते सति सवनीय एव बुद्धिस्थो भवति प्रकृतौ तदानन्तर्यस्य क्लृप्तत्वात् । तत सवनीयस्य प्राथम्ये स्थानान्निश्चिते सति स्थानभ्रष्टयोरग्नीषोमीयानुबन्ध्ययो प्रकृताविव पूर्वोत्तरभावो द्रष्टव्य इति । यद्वा । **उक्तमिति** । आदौ सवनीयपशोरनुष्ठानमितरयो पश्चादित्यत्र पूर्वेणोक्तमित्यर्थ ।

अथ मुख्यक्रम लक्षयति--**प्रधानक्रमेणेति** । तेनैव क्रमेणेत्यत्र यदेति शेषस्तदेत्यनु रोधात् । यत्र त्वनेकेषा साङ्गानां प्रधानानां सहकर्तव्यता तत्र प्रयोगविधिनाङ्गप्रधानयो साहित्यावगमात्तथापि प्रधानान्तरसाहित्यानुरोधेन यावदनुज्ञातव्यवधानस्वीकारेऽपि तदधिकव्यवधाने

पामङ्गानां स्वैः स्वैः प्रधानैस्तुल्यं व्यवधानं भवति । व्युत्क्रमणानुष्ठाने केषांचिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानं केषांचिदत्यन्तं व्यवधानं स्यात्, तच्चायुक्तं, प्रयोगविध्यवगतसाहित्यबाधापत्तेः । अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः । अतएव प्रयाजशेषेणादावाग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः, आग्नेयैन्द्रयागयोः पौर्वापर्यात् । एवंच द्वयोरभिघारणयोः स्वस्वप्रधानेन तुल्यमेकान्तरितं व्यवधानं, व्युत्क्रमेणाधारे

If, (on the other hand) they are performed in a different order, some of the subsidiaries will not be at all separated by any distance from their principals while others will be separated by a good deal of it This is unreasonable as it would bring about the annulment of the *proximity* (SĀHITYA) (of the actions) gathered from the injunction of performance Hence even the Order of the Principals becomes the basis of the order of the subsidiaries That is why owing to the Agni-sacrifice preceding and the Indra-sacrifice succeeding it, the ghee-sprinkling of the oblations to Agni, subservient to the PRAYĀJAs takes place first and *afterwards that of the curds in honour of Indra* Thus the distance between each of these two sprinklings from its respective principal becomes equal (in the two cases), the matter intervening (between the subsidiary and the principal) being one (only in both cases), If the sprinkling were performed in the reverse order, there will be

---

प्रमाणाभावात्प्रधानप्रत्यासत्त्यनुग्रहाय मुख्यक्रमेणैवाङ्गक्रमनियम । अतएव प्रवृत्तौ अङ्गनिरूपितप्रत्यासत्त्यनुग्रहो बीजं, मुख्यक्रमे तु प्रधाननिरूपितप्रत्यासत्त्यनुग्रहो बीजमिति तयोर्भेद इति भाव । प्रधानक्रमव्युत्क्रमेणाङ्गानुष्ठाने बाधकमाह—व्युत्क्रमेणेत्यादिना । तत्रापीष्टापत्तिमाशङ्क्य प्रयोगविध्यवगततत्साहित्यबाधापत्तिरूपमनिष्टं बाधकमाह—तच्चायुक्तमिति ।

[illegible] ।

[illegible] णेन

व्यवधानादैन्द्रहविरभिघारणैन्द्रयागयोश्चाग्नेययागेन व्यवधानादेकान्तरितं व्यवधानमित्यर्थ । तथाचादावाग्नेयहविरभिघारणं तत ऐन्द्रस्य हविषोऽभिघारणं, तत आग्नेययाग ततश्चैन्द्रयाग इत्येव क्रमो मुख्यक्रमात्सिद्धो भवतीति भाव । यदि त्वादावैन्द्रहविषोऽभिघारणं

स्त्वाग्नेयहविरभिघारणाग्नेययागयोरत्यन्तमव्यवधानम्, ऐन्द्रदध्यभिघारणैन्द्रयागयोर्द्व्यन्तरितं व्यवधानं तच्चायुक्तमित्युक्तमेव ।

( ४५ )

सच मुख्यः क्रमः पाठक्रमाद्दुर्बलः । मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकः । पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान् । सचायं

absolutely no distance between the sprinkling of the Agni-oblation and the Agni-sacrifice; while the distance between the sprinkling of the Indra-curds and the Indra-sacrifice will be doubled. And, as it has been already said, this is unreasonable

( 45 )

This Order of the Principals is weaker than the Order of Text ( *Seriatim* ) For, the apprehension of the Order of the Principals is delayed owing to its being dependent upon the order of the principals which, in its turn, depends upon another means of proof The Order of Text ( *Seriatim* ), on the other hand, is not so owing to its depending upon the

---

तत आग्नेयहविषस्तत्क्रियते ततश्च याज्यानुवाक्याक्रमवशादाग्नेययागस्यानुष्ठानं तत ऐन्द्रयागस्यानुष्ठानमिति क्रम· स्वीक्रियते तदा कस्यचिदत्यन्तमव्यवधानं कस्यचिदत्यन्तव्यवधानं च स्यात्, तच्चायुक्त, प्रयोगविध्यवगततत्साहित्यबाधापत्तेरित्यभिप्रेत्याह—**व्युत्क्रमेणेत्यादिना** । **उक्तमेवेति** । ' तच्चायुक्तं प्रयोगे'स्यादौ दूषणमुक्तमेवेत्यर्थः । इदानीं पाठक्रमान्मुख्यक्रमस्य दौर्बल्यमाह—**सचेति** । तत्र हेतुमाह—**मुख्यक्रमो हीति** । यतो मुख्यक्रम प्रमाणान्तरसापेक्षा या प्रधानक्रमस्य प्रतिपत्तिस्तत्सापेक्षत्वेन विलम्बितप्रतिपत्तिकोऽत· पाठक्रमाद्दुर्बल एवेत्यर्थ· । किंच निरपेक्षो य· स्वाध्यायपाठक्रमस्तन्मात्रसापेक्षत्वेन यतो न दुर्बलः पाठक्रमोऽतो बलवानिति पाठक्रमस्य ततो वैषम्यमाह—**पाठक्रमस्त्विति** । अत्रेदं बोध्यम्—दर्शपूर्णमासयोरुपांशुयाजोऽग्नीषोमीयश्चेत्येतदुभयं पौर्णमास्यामाम्नातम् । तत्रोपांशुयाजस्याज्यं द्रव्यम्, आज्यस्य धर्मा उत्पवनचतुर्गृहीतत्वादय·, अग्नीषोमीयस्य पुरोडाशो द्रव्यं तस्य धर्मा निर्वापावघातादयः, तत्र चायं पूर्वपक्ष —मुख्यौ यागावुपांशुयाजाग्नीषोमीयौ पूर्वोत्तरभाविनौ भवतः, तथाच सति अङ्गक्रमस्य प्रधानक्रमेणैवाश्रयणीयत्वात्प्रथममाज्यधर्माणामेवानुष्ठानं न निर्वापादीनामिति । तत्र सिद्धान्त·—औषधधर्मा निर्वापादयः पूर्वमाम्नाता· । आज्यधर्मास्तु पश्चात् । तत्र मुख्यक्रमप्रयुक्तमाज्यधर्माणां प्राथम्यं बाधित्वा पाठक्रमानुरोधेनौषधधर्मा एव

मुख्यः क्रमः प्रवृत्तिक्रमाद् बलवान् । प्रवृत्तिक्रमे हि बहूनामङ्गानां प्रधानविप्रकर्षात्, मुख्यक्रमे तु संनिकर्षात् ।

(४६)

सहप्रयुज्यमानेषु प्रधानेषु संनिपातिनामङ्गानामावृत्त्यानुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः। यथा

order of the Vedic statements that do not depend upon any thing else This Order of the Principals, again, is stronger than the Order in Continual performance For, in the Order in Continual Performance, many subsidiaries happen to be far removed from their principals whereas they remain near in the Order of the Principals

(46)

*Order in Continual Performance* is the order of the second and the following (subsidiary) matters which is based upon the order of the mat er done first, when the subsidiaries converging towards the princ pals which are performed simultaneously require to be performed by

---

प्रथमतोऽनुष्ठया, पाठक्रमो हि वैदिके शब्दे सहसा प्रतीयते, मुख्यक्रमानुसारी तु क्रम उपपत्त्या कल्पनीय । तस्मादग्नीषोमीयपुरोडाशार्थो औषधधर्मा प्रथममनुष्ठेया आज्य धर्मास्तु पश्चादिति । प्रवृत्तिक्रमापेक्षया तु मुख्यक्रमस्य प्राबल्यमेवेत्याह—**प्रवृत्तीति** । तत्र हेतुमाह—**प्रवृत्तिक्रमे हीति** । अत्रेदं बोध्यम्—दर्शपूर्णमासयोरादावाग्नेययागस्यानुष्ठानं ततः सान्नाय्ययागस्य, सान्नाय्यधर्माश्च केचिद्वत्सापाकरणदोहनादयः पूर्वमेवानुष्ठीयन्ते । तत्र यदि प्रवृत्तिक्रममाश्रित्य सान्नाय्यधर्मा अवदानाभिघारणादिरासादनादयोऽपि सर्वे पूर्वमेवानुष्ठीयेरन् तत आग्नेयधर्मा अवदानादयस्तदनुष्ठानं च, ततः सान्नाय्ययागानुष्ठानं तदा सान्नाय्यधर्माणां सर्वेषां स्वप्रधानेन सह द्वाभ्यामाग्नेयधर्मतदनुष्ठानाभ्यां विप्रकर्षः स्यात् । यदा तु सान्नाय्यधर्माणां केषांचिद्वत्सापाकरणादीनां पूर्वमनुष्ठानेऽप्यन्ये सर्वेऽवदानादयस्तद्धर्मा मुख्यक्रममाश्रित्याग्नेयधर्मानुष्ठानानन्तरमनुष्ठीयन्ते तदा सर्वेषामाग्नेयधर्माणां सान्नाय्यधर्माणामेकेनैव विजातीयेन व्यवधानं भवति । आग्नेयधर्माणां स्वप्रधानेन सह सान्नाय्यधर्मैर्व्यवधानात्सान्नाय्यधर्माणां च स्वप्रधानेन सहाग्नेयानुष्ठानेन व्यवधानादिति न विप्रकर्षः । तस्मान्मुख्यक्रमः प्रवृत्तिक्रमाद्बलवानिति ।

इदानीं प्रवृत्तिक्रमं लक्षयति—**सहप्रयुज्येत्यादिना** । तत्रोदाहरणमाह—**यथेति** । प्रजापत्या हि ते तैस्तैर्व्यक्ताः एककालत्वेन विहिता इत्यन्वयः । अत इति । तेषामेक-

प्राजापत्यपश्वङ्गेषु । प्राजापत्या हि 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति (तै.ब्रा.१-३-४-३१) वाक्येन तृतीयानिर्देशात्सेतिकर्तव्यताका एककालत्वेन विहिताः, अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं संपाद्यम् । तच्च प्राजापत्यपशूनां समानैककदेवताकत्वेन युगपदनुष्ठाना-दुपपद्यते । तदङ्गानां चोपाकरणादीनां युगपदनुष्ठानमशक्यम् । अत-स्तेषां साहित्यमव्यवहितानुष्ठानात्संपाद्यम् । तच्चैकस्योपाकरणं विधा-

repetition The subsidiaries of the animals, belonging to the sacrifices to the Prajapati are a case in point. For, the sacrifices to the Prajapati are enjoined to be performed simultaneously *along with their details*—as is clear from the direction in the Instrumental by the sentence, "They should perform the sacrifices to Prajapati after they offer a sacrifice to the Vishvadevas." It follows therefore that the proximity between them and their subsidiaries like *UPĀKARANA*, *NIYOJANA* and others has to be secured. And that becomes possible by simultaneously sacrificing the animals to Prajapati on account of the deity and time being agreed upon. But their subsidiaries like UPĀKARANA and others cannot be performed simultaneously Hence their proximity is to be secured by uninterrupted performance This proximity is to be secured by performing the UPĀKARANA of one, then of a second

---

कालत्वेन विहितत्वादित्यर्थः । तेषामिति । प्राजापत्यानामित्यर्थः । उपाकरणेत्याद्युपलक्षणार्थं एव बोध्यः । तच्चेति । साहित्यं चेत्यर्थः । [illegible] पाठः । [illegible] देवता च प्रजापतिरेव । तदङ्गानामिति । प्राजापत्याङ्गानामित्यर्थः । अशक्यमिति । अनेकेषां पशूनामुपाकरणं नियोजनं चैकस्मिन् [illegible] कर्तुमशक्यमित्यर्थः । अत इति । उपाकरणादीनां युगपदनुष्ठानाशक्यत्वादित्यर्थः । तेषामिति । उपाकरणादीनामित्यर्थः । तच्चेति । अव्यवधानेन साहित्यं चेत्यर्थः । एकैकस्य पशोर्नियोजनं [illegible] नियोजनं [illegible]—एव-मिति । प्रथमं एकैकस्य पशोः [illegible] पशोरनुष्ठितमेव पदार्थं द्वितीयादि पशोरपि इत्याह—तथाचेत्यादिना । सोऽयमिति । [illegible] इत्यर्थः । [illegible] उच्यते । अतेदं बोध्यम्—[illegible]

यापरस्योपाकरणं विधेयम् । एवं नियोजनादिकमपि । तथाच प्राजापत्येषु कस्माच्चित्पशोरारभ्य एकं सर्वत्रानुष्ठाय द्वितीयादिपदार्थस्तेनैव क्रमेणानुष्ठेयः स प्रवृत्तिक्रमः । सोऽयं श्रुत्यादिभ्यो दुर्बलः । तदेवं संक्षेपतो निरूपितः षड्विधक्रमनिरूपणेन प्रयोगविधिः ।

( ४७ ) qualification

कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः । कर्मजन्यफलस्वाम्यं कर्मजन्यफलभोक्तृत्वम् । सच 'यजेत स्वर्गकामः' इत्यादिरूपः ।

...nd so on ) Subsidiaries like NIYOJANA also are to be performed likewise Thus it is Order in Continual Performance in the sacrifices to the Prajapati that having performed one (act) in the case of all the animals beginning with some one of them (and proceeding in a particular order) the second and the subsequent (acts) have to be done in the same order This is weaker than Express Statement and other means of proof Thus, in brief, has been examined the Injunction of Performance through an examination of the six kinds of Order

( 47 )

Injunction of Competence is one which conveys the ownership of a fruit to be produced by some action The ownership of a fruit to be produced by an action is the same as becoming the enjoyer of the fruit to be produced by the action It appears in the form, "One aspiring to heaven

---

भवन्ति सप्तदश प्राजापत्यान्पशूनालभेतेति तद्विधौ तथैव श्रवणात् । तथाच प्राजापत्येषु तेषु यं कञ्चित्पशुमारभ्योपाकरणं सप्तदशसु पशुषु कृत्वा तमेव पशुमारभ्य नियोजनं कर्तव्यम् । एवञ्च सप्तदशपशूपाकरणानां तत्तत्पशुनियोजनैस्तुल्य षोडशक्षणैर्व्यवधानं भवति । तथासति 'सप्तदश प्राजापत्यान्पशूनालभेत' इत्युत्पत्तिवाक्ये 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति प्रयोगवाक्ये च श्रुतं धर्माणां सप्तदशपशुधर्माणां साहित्यमुपपद्यते । अन्यथा तेष्वेकैकस्मिन्नुपाकरणनियोजनादिरूपे संस्काराणां समापने प्रथमपशुगतधर्माणां साहित्यं बाधितं भवेदिति । एवं निरूपितं षड्विधक्रमनिरूपणेन प्रयोगविधिमुपसंहरति—तदेवमिति ।

इदानीं क्रमप्राप्तमधिकारविधिं निरूपयति—कर्मजन्येति । कर्मजन्यफलस्वाम्यपदं व्याचष्टे—कर्मजन्यफलस्वाम्यमिति । स चेति । अधिकारविधेरयं ।

स्वर्गमुद्दिश्य यागं विदधताऽनेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । 'यस्याहिताग्नेरग्निर्गृहान्दहेत्सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपे' (तै स २-२-२-५) दित्यादिनाऽग्निदाहादौ निमित्ते कर्म विदधता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते । एवं 'अहरहः सन्ध्यामुपासीत' (षड्विंश ब्रा ४-५ १) इत्यादिना शुचिविहित-कालजीविनः संध्योपासनजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं बोध्यते ।

( ४८ )

तच्च फलस्वाम्यं तस्यैव योऽधिकारविशिष्टः, अधिकारश्च स एव

should sacrifice " While enjoining sacrifice with a view to heaven, it states that one who aspires to heaven enjoys the fruit to be produced by (performing) the sacrifice The injunction, "That fire-maintainer whose house is burnt by fire should offer the eight pan sacrifice to the hungry (KSHAMAVATE) Agni," while enjoining an act on the occurrence of an accidental circumstance like fire, states that one who is in that circumstance becomes entitled to the fruit viz destruction of sin to be produced by the (sacrificial) action Similarly, ' One should offer Twilight Prayers, every day " conveys the ownership of the fruit viz. removal of sin, to be produced by offering the Twilight-Prayers, by one who lives a life of purity performing his duties at the prescribed time

( 48 )

And that ownership of fruit belongs to him only who is qualified by the competence Competence is nothing but

---

अनेनेति । 'यजेत स्वर्गकाम' इत्यादिवाक्येनेत्यर्थ । तत्रोदाहरणान्तरमाह--यस्येति । क्षामवत इति । क्षामवत्त्वगुणविशिष्टायेत्यर्थ । निमित्तवत इति । अग्निना गृहदाहादि रूपनिमित्तवत पुरुषस्येत्यर्थं । इत्यादिना कर्म विदधता विधिनेत्यन्वय । कर्मजन्येति । अग्निदेवताककर्मजन्येत्यर्थ । तत्रैवोदाहरणान्तरमाह—एवमिति । शुचिविहितकालजीविन इति । शौचविशिष्टत्वे सति विहितकालजीविन इत्यर्थं । तच्चेति । फलविधिबोधित चेत्यर्थ । को ह्यधिकारो यद्विशिष्टस्य पुस कर्मजन्यफलभोक्तृत्वरूपं फलस्वाम्य विधिना बोध्यत इत्यत आह— अधिकारश्चेति । अतएवेति । विधिवाक्येषु पुरुषविशेषणत्वेन

यद्विधिवाक्येषु पुरुषविशेषणत्वेन श्रूयते । यथा काम्ये कर्मणि फलकामना, नैमित्तिके कर्मणि निमित्तनिश्चयः, नित्ये संध्योपासनादौ शुचिविहितकालजीवित्वम् । अतएव 'राजा राजसूयेन स्वाराज्यकामो यजते' इत्यनेन विधिवाक्येन स्वाराज्यमुद्दिश्य विदधतापि न स्वाराज्यमात्रकामस्य तत्फलभोक्तृत्वं प्रतिपाद्यते, किंतु राज्ञः सतः स्वाराज्यकामस्यैव, राजत्वस्याप्यधिकारिविशेषणत्वेन श्रवणात् ।

( ४९ )

कचित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणम् । यथाध्ययन-

*whatever is stated, in the injunctory sentences, as the attribute of the person* To illustrate —The desire for a fruit in the case of an *Optional Act*, the *determination of a circumstance* in the case of an Occasional Act, and the attribute of living a pure life performing the duties at the prescribed time in the case of a Necessary Act like Twilight Prayers, (are instances of Competence) Hence it is that the injunctory sentence, "A king aspiring to heaven-rulership should sacrifice"-though enjoining (RĀJASŪYA), with a view to the rulership of heaven-does not state that he who is only an aspirer to the rulership of heaven will enjoy the fruit of it (i e RĀJASŪYA), but exclusively one who, while being a KSHATRIYA, aspires to heaven rulership, because even KSHATRIYA-hood has been stated to be an a attribute of the person competent (for the sacrifice)

( 49 )

In certain cases, however, something which though not *expressly stated as an attribute of the person becomes the*

---

श्रूयमाणस्याधिकारत्वादेवेत्यर्थः । स्वाराज्यमुद्दिश्य यत्र राजसूयमिति शेषः । राज्ञः सत इति । क्षत्रियस्य सत इत्यर्थः । तत्र हेतुमाह—राजत्वस्येति । श्रवणादिति । 'राजा राजसूयेन' इत्यत्र श्रवणादित्यर्थः । अत्र हि राजशब्देन क्षत्रिय एवोच्यते न तु राज्यपरिपालनमात्रेण तदन्योऽपि । तेन क्षत्रियस्यैव राजसूयेऽधिकारो न तु तदन्यस्य ब्राह्मणादेरित्यन्यत्र विस्तर इति भावः ।

क्वचित्त्विति । तत्रोदाहरणमाह—यथेति । विशेष्यत्र विधिवाक्येष्वश्रुतमप्यधिकारिविशेषणत्वेन तद्विशेषणमिति शेषः । तत्र हेतुमाह—सत्त्वित्यादिना । तत्रोदाहरणान्तरमाह—

स्वाध्यायोऽध्येतव्य ।

विधिसिद्धा विद्या,क्रतुविधीनामर्थज्ञानापेक्षणीयत्वेनाध्ययनविधिसिद्धार्थ-ज्ञानवन्तं प्रत्येव प्रवृत्तेः । एवमग्निसाध्यकर्मसु आधानसिद्धाग्निमत्ता । अग्निसाध्यकर्मणामग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव

qualification of the competent person; as, for instance, knowledge established by the injunction for study of the Veda. For, the injunctions for sacrifices being dependent upon an apprehension of sense are applicable only to one who possesses the knowledge of the sense a natural sequel to the study-injunction. Similarly, in the case of acts to be performed with holy fire, to be provided with fires, a sequel to maintaining them, (is an implied qualification) For, since the acts to be performed in fire require fire, the injunctions relating to them will be applicable only to one who possesses fires in consequence of maintaining them

---

एवाग्निमिति । अग्निमत्तेत्यत्रापि पूर्ववदेव हेतो योध्य । तत्रापि हेतुमाह—अग्निसाध्येति । तद्विधीनामिति । अग्निसाध्यकर्मविधीनामित्यर्थ । अनेन च निरुक्ताधिकारिविशेषणेन शूद्रस्य यागेऽनधिकारो ध्वनित । तस्याध्ययनविधिसिद्धविद्याया अभावादाधानसिद्धाग्निमत्ताया अभावाच्च । किंच अध्ययने ह्युपनीतस्यैवाधिकारात् । उपनयनेऽपि च 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिना त्रैवर्णिकस्यैवाधिकारविधानात् । अग्न्याधानेऽपि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना त्रैवर्णिक-मात्रस्याधिकारविधानाच्च । यद्यपि 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेन रथकारस्य सौधन्वना परनामकस्याग्न्याधानं विहितं योगाद्रूढेर्बलीयस्त्वात् तथापि नास्योत्तरकर्मस्वधिकार तस्याध्य-यनविधिसिद्धविद्याया अभावादित्यन्यत्र विस्तर इति भाव । ननु तत्र रथं करोतीति व्युत्पत्त्या त्रैवर्णिक एव रथकारो न तु शूद्रस्य तत्राप्यधिकार इति चेन्न । संकीर्णजातिविशेषे रथकारशब्दस्य रूढत्वात् । तथाहि—वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः । शूद्रायां वैश्यादुत्पन्ना करणी । तस्यां करण्यां माहिष्यादुत्पन्नो रथकार । तथाच याज्ञवल्क्य —'माहिष्येण करण्यां तु रथकार प्रजायते' इति । तस्मात् तादृश्युत्पत्त्या त्रैवर्णिको रथकारशब्देन ग्रहीतुं शक्यत इति । किंच कुत्रचिद्यागेऽपि कस्यचिच्छूद्रस्याधिकारो भवति 'वास्तुमयं रौद्रं चरुं निर्वपे'दिति प्रकृत्य 'एतया निषादस्थपतिं याजये' दिति श्रवणात् । वास्तुशब्द किंचित्प्रकृतिद्रव्य-विशेषमाह । एतस्यामिष्टावधिकारी निषादस्थपतिशब्दवाच्यस्त्रैवर्णिक एव । कुत । निषादानां स्थपतिरिति षष्ठीसमासस्य त्रैवर्णिके संभवात् । तस्य ह्युपात्तत्वेन विद्यासद्भावाच्चेति प्राप्ते सूत्र—निषादश्चासौ स्थपतिश्चेति कर्मधारयसमासस्य मुख्यत्वात् षष्ठीसमासेन त्रैवर्णिको निषादस्थपतिशब्दार्थ । षष्ठीसमासे तु संकीर्णजातिविशेषवाचिना निषादशब्देन तत्सम्बन्ध उप-लक्ष्येत । कर्मधारये दोषोऽस्ति । तस्मात् तत्कालिकाध्ययनोपदेशादिना विद्यां सम्पाद्य आहिताग्निको निषादो रौद्रं यागं कुर्यादिति राद्धान्त । अध्ययनविधिसिद्धविद्येत्युपलक्षणमर्थ्यमपि

प्रवृत्तेः । एवं सामर्थ्यमपि 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी'ति ( शाबर १-४-१० ) न्यायात् समर्थं प्रत्येव विधिप्रवृत्तेः । तदेवं निरूपितो विधिः ।

( ५० )

प्रयोगसमवेतार्थस्मारका मन्त्राः । तेषां च तादृशार्थस्मारकत्वेनैवार्थवत्त्वम् । न तु तदुच्चारणमदृष्टार्थम्, संभवति दृष्टफलकत्वेऽदृष्टकल्पनाया अन्याय्यत्वात् । न च दृष्टस्यार्थस्मरणस्य प्रकारान्तरेणापि संभवान्मन्त्रा-

Thus capability also (of the particular person is an implied qualification) according to the principle, "When stated words (AKHYĀTA) are to be interpreted Power should be taken help of" for, an Injunction applies only to one who is capable Thus has been examined Injunction

( 50 )

Incantations (MANTRA) are reminders of matters intimately connected with the performance (of sacrificial acts) And their utility consists only in being reminders of matters of that nature Their recitation, in fact (TU) is not for an unseen purpose For, it is unreasonable to imagine an unseen fruit when it is possible for a thing to have a seen one It should not be argued that the Vedic prescription (ĀMNĀNA) for incantations is futile, on the ground that the visible fruit of reminding (one) of matters

---

विधिवाक्येष्वश्रुतमप्यधिकारिविशेषणमित्याह—एवमिति । सामर्थ्यमिति । आध्यावेक्षणादिकं लौकिकं सामर्थ्यमित्यर्थः । वैदिकसामर्थ्यस्याध्ययनविधिसिद्धत्वाद् पूर्वमेवोक्तत्वादित्यर्थः । षष्ठोक्तन्यायं निगमकं समुदाहरन् तत्र हेतुमाह—आख्यातानामिति । अनेन च विशेषणेनान्धादेरनधिकारो ध्वनितः । विधिनिरूपणमुपसंहरति—तदेवमिति । तस्मिन्प्रतीते ग्रन्थ उक्तप्रकारेणेत्यर्थः ।

यः सर्वकर्ता सकलप्रपञ्चचन्द्रार्कवह्नीक्षणकश्चिदात्मा ।
साम्बो हि सोमार्धविभूषणाढ्यस्तं नौमि देवार्चितपादपीठम् ॥ १ ॥

इदानीं मन्त्ररूपं वेदभागं निरूपयति—प्रयोगेति । तेषामिति । मन्त्राणामित्यर्थः । तादृशार्थेति । प्रयोगसमवेतार्थेत्यर्थः । अर्थवत्त्वमिति । प्रयोजनवत्त्वमित्यर्थः । ननु मन्त्रोच्चारणस्यादृष्टार्थत्वेनाप्युपपत्तेः कुतस्तेषां प्रयोगसमवेतार्थस्मारकत्वेनैव प्रयोजनवत्त्वमित्यत आह—न त्विति । तदुच्चारणमिति । मन्त्रोच्चारणमित्यर्थः । तत्र हेतुमाह—दृष्टफलकत्व इति । ननु दृष्टस्य देवताद्यर्थस्मरणस्य ब्राह्मणवाक्यादिनापि संभवान्मन्त्रोच्चारणस्या

म्नानं व्यर्थमिति वाच्यम् । मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात् ।

(५१)

नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिर्नियमविधिः । यथाहुः 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते' (तन्त्रवार्तिक १-२-४) इति ।

अस्यार्थः प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्वविधिः यथा 'यजेत स्वर्गकाम' इत्यादिः स्वर्गार्थकयागस्य प्रमाणान्तरेणाप्राप्तस्यानेन विधानात् ।

is possible in other ways also For, the restrictive injunction, that by means of incantations alone should (matters) be remembered, has been acknowledged (on all hands)

(51)

When with regard to an action that can be performed by various means we are likely to resort to one means (EKASĀDHANA-PRĀPTAU), the injunction which enforces (PRĀPAKA) a different means is an Injunction of Restriction (NIYAMA-VIDHI) As they say —An (Original) Injunction is one which is present in cases of absolute non-obtainment; an Injunction of Restriction is one that is present in cases of alternative non-obtainment, and an Injunction of Exclusion is one which is present in cases of obtainment there (in the particular case) and elsewhere

Its meaning is as follows.—An Original Injunction is one which enforces a thing not obtained by any other means of proof. An instance of it is the injunction, "One aspiring to heaven should sacrifice", because it lays down a sacrifice for heaven, which does not obtain by any other means of proof

---

दृष्टार्थकत्वानङ्गीकारे तदाम्नानस्य वैयर्थ्यापत्तिरित्याशङ्क्य मन्त्रैरेव सोऽर्थः स्मर्तव्य इति नियमविध्यङ्गीकारात्‌ मन्त्राम्नानस्य वैयर्थ्यमिति परिहरति—नचेत्यादिना ।

ननु किंलक्षणको नियमविधिर्यदाश्रयणादन्यस्यार्थस्मारकस्य व्यवच्छेदो लभ्यत इत्याशङ्क्य नियमविधिलक्षणमाह—नानासाधनेति । तत्र सम्मतिमाह—यथाहुरिति । तां व्याचष्टे—अस्यार्थ इत्यादिना । तत्रापि विधिरत्यन्तमप्राप्ताविति प्रथमपादमपूर्वविधिपरं व्याचष्टे—प्रमाणान्तरेणेति । प्रमाणान्तरेण यदर्थत्वेनाप्राप्तस्य तदर्थत्वेन प्रापको यो विधिः सोऽपूर्वविधिरित्यर्थः । तत्रोदाहरणमाह—यथेति । तस्यापूर्वविधित्वे हेतुमाह—स्वर्गेति । स्वर्गार्थकत्वेन

पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः । यथा ' व्रीहीनवहन्ती ' त्यादिः । कथमस्य पक्षेऽप्राप्तत्वमितिचेदित्थम् । अनेन ह्यवघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यतेऽन्वयव्यतिरेकसिद्धत्वात् । किंतु नियमः । सचाप्राप्तांशपूरणम् । वैतुष्यस्य हि नानोपायसाध्यत्वाद्यदावघातं परित्यज्य उपायान्तरं ग्रहीतुमारभते, तदावघातस्याप्राप्तत्वेन तद्विधाननाम-

An Injunction of Restriction is one which enforces a thing not obtaining in one alternative The injunction, ' One should thrash the rice grains," is an instance in point If it be asked, ' How does it enforce a thing not obtaining in one alternative ? ' , we reply, " Thus, Verily, this injunction) does not state that thrashing is meant for unhusking for, that (*i e* their relation as cause and effect) is gathered from positive and negative instances But restriction (is stated by it) And it consists in the fulfilment of the element not obtaining For, as unhusking can be effected by means more than one, when one, leaving thrashing proceeds to adopt a different means, then thrashing not obtaining, this injunction only effects the fulfilment of the nonobtaining element of *i e* its performance Hence in an Injunction of Restri

प्रमाणान्तरेणाप्राप्तस्य यागस्य तदर्थत्वेन यजेत स्वर्गकाम इत्यनेन विधानाद्वयमपूर्वविधिरित्यर्थः । नियम पाक्षिके सतीति द्वितीयपाद प्रकृते समतिरूप व्याचष्टे—**पक्षेऽप्राप्तस्येति** । तत्रोदाहरणमाह—**यथेति** । **ननु** व्रीहीनवहन्तीत्यस्यावघातविधे कथ पक्षेऽप्राप्तस्यावघातस्य प्रापकत्व स्वीक्रियते, वैतुष्यार्थत्वेन प्रमाणान्तरेणाप्राप्तस्य तस्य तदर्थत्वेनानेन विधानोपपत्तेरित्याशङ्कयानेन हि विधिनावघातस्य वितुषनार्थत्व न प्रतिपाद्यते तस्य तदर्थत्वेनान्वयव्यतिरेकसिद्धत्वात्, अवघातादिसत्त्वे व्रीहीणां वैतुष्य जायते तदसत्त्वे तदभाव इति सार्वजनीनमिति परिहरति—**कथमित्यादिना** । **इत्थमिति** । अनेन वक्ष्यमाणप्रकारेणेत्यर्थं । **ननु** यद्यवघातादीना सर्वेषामेव वैतुष्यार्थत्वमन्वयव्यतिरेकाभ्यां सिद्ध तदा ' व्रीहीन वहन्ती त्यवघातविधेरन्वयव्यतिरेकसिद्धावघातप्रापकत्वेन वैयर्थ्यमेवापद्येतानुवादकत्वादित्याशङ्कते—**किंत्विति** । नास्य विधेरनुवादकत्वेन वैयर्थ्यं सम्भवति नियमविधायकत्वेनानुपपत्तेरिति परिहरति—**नियम इति** । व्रीहीणां वैतुष्यमवघातेनैव संपादनीयमिति नियम प्रतिपाद्यत इत्यर्थ । **ननु** तादृशनियमप्रतिपादनेऽत्र कीदृशो वाक्यार्थो भवतीत्यत आह—**सचेति** । स एवाप्राप्तांशपूरणरूपो नियमोऽत्र वाक्यार्थ इत्यर्थ । **ननु** कथमत्राप्राप्तांशो लभ्यते यस्य पूरणे-

कमप्राप्तांशपूरणमेवानेन विधिना क्रियते । अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः । पक्षेऽप्राप्तावघातस्य विधानमिति यावत् ।

उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिः । यथा—'पञ्च पञ्चनखा भक्ष्या' ( रामायण, किष्किन्धाकाण्ड १७-३९ ) इति । इदं हि वाक्यं न पञ्चनखभक्षणपरं, तस्य रागतः प्राप्तत्वात् । नापि नियमपरं, पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात् । अत इदमपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः ।

ction, the sense of the sentence is merely restriction consisting in the fulfilment of the element not obtaining It is the same as laying down thrashing that does not obtain in one alternative

When both (alternatives) obtain simultaneously, the injunction that excludes one of them (ITARA) is an Injunction of Exclusion The injunction "Five five-nailed animals should be eaten," is an instance of it This sentence does not aim at (laying down) the eating of the five-nailed animals, since it (*i e* eating) obtains voluntarily Neither does it aim at restriction, since it is not that the eating of the five-nailed and other animals does not obtain in one alternative, for both obtain simultaneously - Hence *this (sentence) aims at (laying down) abstention* from eating animals that are not five-nailed and is, therefore, an Injunction of Exclusion

---

नास्य विधेः सार्थक्यमिति यतोऽत्राप्राप्तांशपूरणरूपमेव वाक्यार्थमुपपादयति—**येनेत्यादिना** । उपपादितमप्राप्तांशपूरणरूपं वाक्यार्थमुपसंहरति—**अतश्चेति** । अस्य विधेरप्राप्तांशपूरणरूपनियमप्रतिपादकत्वाच्चेत्यर्थः । पर्यवसितार्थमाह—**पक्ष इति** । **यावदिति** । पर्यवसानमित्यर्थः ।

तत्र श्लोकस्योत्तरार्धं परिसंख्याविधिपरं व्याचष्टे—**उभयोश्चेति** । तत्रोदाहरणमाह—**यथेति** । अस्यात्यन्तमप्राप्तविधित्वरूपमपूर्वविधित्वमाशङ्क्य निराचष्टे—**इदं हीति** । तत्र हेतुमाह— **तस्येति** । पञ्चनखभक्षणस्येत्यर्थः । अस्य वाक्यस्य नियमविधित्वमपि निराचष्टे—**नापीति** । तत्रापि हेतुमाह—**पञ्चनखेति** । **अत इति** । विधिद्वयासंभवादित्यर्थः । **इदमिति** । पञ्च पञ्चनखा भक्ष्या इति वाक्यमित्यर्थः । अपञ्चनखभक्षणनिवृत्तिस्तु न केनापि प्राप्ता । ततश्च तद्विधायकत्वेन नास्य वाक्यस्यानुवादकत्वमपि । तथा च सैवात्र वाक्यार्थ इति भावः ।

सा च द्विविधा–श्रौती लाक्षणिकी चेति। तत्र 'अत्र ह्येवावपन्ती' (१) ति श्रौती परिसंख्या। एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्। 'पञ्च पञ्चनखा भक्ष्या' इति तु लाक्षणिकी। इतरनिवृत्तिवाचकपदाभावात्। अतएवैषा त्रिदोषग्रस्ता।

(५२)

दोषत्रयं च श्रुतहानि–रश्रुतकल्पना–प्राप्तबाधश्चेति। तदुक्तम्–'श्रुतार्थस्य परित्यागादश्रुतार्थप्रकल्पनात्। प्राप्तस्य बाधादित्येवं परिसंख्या

Again, it is of two kinds Expressed and Implied Of these, Injunction of Expressed Exclusion is illustrated by "They should insert (new words) only in these" For, the word "Only" expresses exclusion of songs of praise other than those praising the PAVAMĀNA (the flowing Soma) "Five five-nailed animals should be eaten," on the other hand, is an Injunction of Implied Exclusion, on account of the absence of a word expressing exclusion of other (animals) Hence it is that this is vitiated by Three Faults.

(52)

The Three Faults are: Abandonment of its own expressed sense, Suggestion of a thing not expressed, and Annulment of the thing obtaining So it is *said*: "Exclusive Injunction suffers from three faults, owing to its abandoning its expressed sense, suggesting a sense *not* expressed, and annulling the thing not obtaining" that

---

सा च परिसंख्या द्विविधेत्याह—सा चेति। आद्यामुदाहरति—तत्रेति। द्वयोः परिसंख्ययोर्मध्य इत्यर्थः। अत्रेति। प्रकृत इत्यर्थः। अवपन्तीति। अवजानन्तीत्यर्थः, गायन्तीति यावत्। श्रौत्याः परिसंख्यायास्तत्त्वे हेतुमाह—एवकारेणेति। द्वितीयामुदाहरति—पञ्चेति। पञ्च पञ्चनखास्तु 'पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव। शशकः शल्लकी गोधा खड्गी कूर्मोऽथ पञ्चमः' इत्यादिवचनोदाहृता बोध्याः। अस्या अपि तत्त्वे हेतुमाह—इतरनिवृत्तीति। अतएवेति। इतरनिवृत्तिवाचकपदाभावादित्यर्थः। एषेति। लाक्षणिकीत्यर्थः।

दोषत्रयं प्रदर्शयति—दोषत्रयं चेति। तत्र श्रुतहानौ हेतुमाह—श्रुतस्येति। अश्रुतकल्पनायां हेतुमाह—अश्रुतेति। प्राप्तस्य बाधेऽपि हेतुमाह—प्राप्तस्येति। रागतः प्राप्त-

त्रिदूपणा' इति । (१) श्रुतस्य पञ्चनखभक्षणस्य हानात्, अश्रुताऽपञ्चनखभक्षणनिवृत्तेः कल्पनात्, प्राप्तस्य चापञ्चनखभक्षणस्य बाधनादिति । अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठम् । प्राप्तबाधस्त्वर्थनिष्ठ इति दिक् ।

येषां तु प्रयोगसमवेतार्थस्मारकत्वं न संभवति तदुच्चारणस्यानन्यगत्याऽदृष्टार्थकत्वं कल्प्यत इति नानर्थक्यमिति ।

(५३)

नामधेयानां च विधेयार्थपरिच्छेदकतयार्थवत्त्वम् । तथाहि 'उद्भिदा यजेत पशुकाम' इत्यत्रोद्भिच्छब्दो यागनामधेयं तेन च विधेयार्थ-

is to say, owing to its abandoning (the sense of) the eating of the five-nailed animals that is expressed, its suggesting abstention from eating animals that are not five-nailed, and annulment of the eating, which obtains, of animals that are not five-nailed. Of these three faults, (the first) two relate to *word* while the annulment of the thing obtaining relates to *sense* This is the out-line.

Those incantations, on the other hand, which cannot possibly remind us of matters intimately connected with the performance (of sacrifice), are assumed as meant for an unseen purpose, for want of a better alternative. Thus they do not become useless.

(53)

Designations are useful by way of marking off (PARICCHEDA) the thing to be performed, To illustrate. In "One desirous of cattle should offer the UDBHID sacrifice," the word UDBHID is the name of a sacrifice and marks off the thing to be performed. To explain;

---

स्येत्यर्थः । अस्य दोषत्रयस्य व्यवस्थया वृत्तित्वमाह—**अस्मिंश्चेति** । दोषत्रयमध्य इत्यर्थः ।

**ननु** कथं सर्वेषां मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेनैवार्थवत्त्वमुपपद्यते हुंफडादिमन्त्राणां प्रयोगसमवेतार्थस्मारकत्वासंभवादित्याशङ्क्याह—**येषामित्यादिना** । **तदुच्चारणस्येति** । हुंफडादिमन्त्रोच्चारणस्येत्यर्थः । अनन्यगत्यादृष्टार्थत्वमित्यत्राऽदृष्टार्थत्वमिति पदच्छेदः । **इति नानर्थक्यमिति** । अतो हेतोर्हुंफडादिमन्त्राणां नानर्थक्यमित्यर्थः ।

मन्त्रभागस्य यथार्थं प्रयोजनवत्त्वमुपपाद्येदानीं क्रमप्राप्तं नामधेयानां सार्थक्यमुपपादयति—**नामधेयानामिति** । **विधेयार्थपरिच्छेदकतयेति** । विजातीयव्यावर्तकत्वेन विधे-

परिच्छेदः क्रियते । तथाहि अनेन वाक्येनाप्राप्तत्वात्फलोद्देशेन यागो विधीयते । यागसामान्यस्याविधेयत्वात् यागविशेष एव विधीयते । तत्र कोऽसौ यागविशेष इत्यपेक्षायामुद्भिच्छब्दादुद्भिद्रूपो याग इति ज्ञायते । उद्भिदा यागेन पशुं भावयेदित्यत्र सामानाधिकरण्येन नामधेयान्वयात् ।

नामधेयत्वं च निमित्तचतुष्टयात् । मत्वर्थलक्षणाभयाद्वाक्यभेदभयात्तत्प्रख्यशास्त्रात्तद्व्यपदेशाच्चेति ।

This sentence enjoins sacrifice, not established (by any other means of proof), with a view to the fruit Since, it is not a sacrifice in general that is enjoined (it follows that) only a particular sacrifice is enjoined When there is an expectancy about the nature of the sacrifice, from the word UDBHID it is gathered that the sacrifice is UDBHID in form For, the designation is construed as standing in grammatical co ordination (with the word YAGA)—By the UDBHID sacrifice, cattle should be realised

That (such words) are designations follows from four circumstances —(1) for fear of an Indication of Possession, (2) for fear of Diversity of Statements, (3) owing to (an [illegible] (TAT A)

---

यार्थनिश्चायकत्वमित्यर्थः । विधेयार्थस्यैव समर्थकस्येति यावत् । एतदेव प्रदर्शयति—**तथाही-त्यादिना** । **तत्र चेति** । उद्भिच्छब्देन इत्यर्थः । उद्भिच्छब्दस्य विधेयार्थपरिच्छेदकतया नामधेयत्वप्रदर्शनाय भूमिकामारचयति—**तथाहीत्यादिना** । **अनेनेति** । 'उद्भिदा यजेत पशुकाम' इत्यनेनेत्यर्थः । **फलोद्देशेनेति** । पशुरूपफलोद्देशेनेत्यर्थः । **यागेति** । साधनत्वे लभ्यमन्तरेण फलेच्छानुपपत्तेर्नात्र यागसामान्यं विधीयते । ततश्च यागविशेष एव विधीयत इत्यर्थः । **तत्रेति** । यागविशेषस्य विधेयत्वे इत्यर्थः । **क इति** । कोऽसौ यागविशेष इति यागविशेषापेक्षायामित्यर्थः ।

तच्च निमित्तचतुष्टयाद्भवतीत्याह—**नामधेयत्वं चेति** । निमित्तचतुष्टयं निर्दिशति—**मत्वर्थेत्यादिना** । तत्राद्यनिमित्तविषयमुदाहरति—**तत्रोद्भिदा यजेतेति** । **तत्रेति** चतुर्षु मध्ये इत्यर्थः । अत्र मत्वर्थलक्षणापत्तिप्रदर्शनाय तावद्वाक्यभेदमापादयति—**न ताव-दिति** । अस्मिन्नुद्भिद्यते भूमिरनेनेति व्युत्पत्त्या खनित्रवाच्योऽयमुद्भिच्छब्दो भवेत्तथा च

( ५४ )

तत्र 'उद्भिदा यजेत पशुकाम' इत्यत्रोद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात् । तथाहि न तावदनेन वाक्येन फलंप्रति यागविधानम्, तंप्रति च गुणविधानं युज्यते, वाक्यभेदापत्तेः उद्भिच्छब्दस्य गुणसमर्पकत्वे च यागस्याप्यप्राप्तत्वात् गुणविशिष्टकर्म

( 54 )

Of these, it is through fear of Indication of Possession that the word UDBHID in "One desirous of cattle should offer the UDBHID sacrifice" is taken to be the Designation of the sacrifice To explain, It is not proper to hold that this sentence enjoins sacrifice with a view to the fruit and (also) a subsidiary thing in relation to it (i e. sacrifice), for this would give rise to Diversity of Statements Moreover, if the word UDBHID were admitted as describing a subsidiary thing, in view of the fact that even the sacrifice is not established (on any other authority), it will have to be said that there

---

'उद्भिदा यजेत पशुकाम' इत्यनेन वाक्येन यागेन पशु भावयेद्याग च खनित्रेण भावयेदिति फलंप्रति यागविधान यागप्रति च गुणविधान क्रियेत, तच्च न युज्यत इत्यर्थं । तत्र हेतुमाह—वाक्येति । आवृत्तिलक्षणवाक्यभेदापत्तेरित्यर्थ । नन्वनेन वाक्येन खनित्ररूपो गुण एव विधीयते । 'दध्ना जुहोती'ति गुणविधिना समानत्वात् । नचात्र पशुफलक कश्चिद्यागो विधीयत इति वाच्यम । पशूनां गुणफलत्वात् । यथा गोदोहनेन पशुकामस्येत्यत्र पशवो गोदोहनगुणस्य फलं तथेह खनित्रगुणस्य फलमस्तु यदि 'चमसेनाप प्रणयती'ति विहितं प्रकृतमपां प्रणयनमाश्रित्य गोदोहनं विधीयते तर्हत्रापि ज्योतिष्टोमेन यजेतेति विहितं प्रकृतं ज्योतिष्टोममाश्रित्य खनित्रं विधीयतां तस्माद्गुणविधिरित्याशङ्क्य पशुकामो यजेतेत्यस्य पदद्वयस्यायमर्थ —पशुरूपं फल यागेन कुर्यादिति । तत्र केन यागेनेत्यपेक्षाया उद्भिदेति तृतीयान्त पद यागनामधेयेनान्वेति । उद्भिद्यते पशुफलमनेन यागेनेति निरुक्त्या नाम त्वमुद्भिच्छब्दस्योपपद्यते । नचैवमपि गुणविधिनामधेयत्वयो शब्दनिर्वचनसाम्यान्न निर्णय इति वाच्यम् । सामानाधिकरण्यस्य निर्णायकत्वात् । तथाहि उद्भिन्नामकेन यागेन पशुरूप फल कुर्यादित्युक्ते सामानाधिकरण्य लभ्यते । गुणविधित्वे तु खनित्रेण साध्यो यो यागस्तेन तादृशफलं कुर्यादित्येवं वैयधिकरण्यं स्यात् । तच्चायुक्तम् । किंच नानेन वाक्येन ज्योतिष्टोमे खनित्ररूपो गुणो विधातु शक्यते, तस्य सोमेन यजेतेत्युत्पत्तिशिष्टसोमरूपगुणावरुद्धत्वात् । किंच यद्यस्योद्भिच्छब्दस्य खनित्ररूपगुणसमर्पकत्वं स्वीक्रियते तदा यत्र तेन गुण समर्पणीयस्तादृशकर्मणोऽप्रप्राप्तत्वादनेन वाक्येन खनित्ररूपगुण-

विधानं वाच्यम् । उद्भिद्वता यागेन पशुं भावयेदिति । विशिष्टविधौ च मत्वर्थलक्षणेत्युक्तमेव ।

(५५)

'चित्रया यजेत पशुकाम' (तै. सं. २-४-६-१) इत्यत्र चित्राशब्दस्य कर्मनामधेयत्वं वाक्यभेदभयात् । तथाहि न तावदत्र गुणविशिष्टयागविधानं संभवति । 'दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं

is enjoined (in the injunction) an action qualified by the subsidiary; and then the sense of the injunction will be "One *should realise* cattle by means of a sacrifice with UDBHID." And it has been already pointed out that in a qualified Injunction there abides Indication of Possession.

(55)

In "One desirous of cattle should offer the CHITRA sacrifice", the word CHITRA has to be interpreted as a designation for fear of Diversity of Statements. To explain: It is not possible to have here an injunction of a sacrifice qualified by a subsidiary thing. For, it is unreasonable to have an injunction of a sacrifice qualified by the subsidiary thing when it (*i.e.*, the subsidiary) is enjoined

---

विशिष्टकर्मविधानमेव वक्तव्यमन्यथा वाक्यभेदप्रसङ्गात् । ततश्चोद्भिच्छब्दार्थरूपकनिष्पन्ना यागेनेति सामानाधिकरण्येनान्वयो भविष्यति । तथाच मत्वर्थलक्षणापत्तिरिति परिहरति–**उद्भिच्छब्दस्येत्यादिना** । **उक्तमेवेति** । 'सोमेन यजेते'ति विध्यर्थनिरूपणप्रस्ताव इति शेषः ।

इदानीं द्वितीयं वाक्यभेदप्रसङ्गरूपं नामधेयत्वस्य निमित्तमुदाहरणद्वारा प्रदर्शयति–**चित्रया यजेतेति** । वाक्यभेदमेवोपपादयति–**तथा हीत्यादिना** । **अत्रेति** । 'चित्रया यजेत पशुकाम' इत्यस्मिन्वाक्य इत्यर्थः । **गुणविशिष्टेति** चित्राशब्दार्थभूतचित्रवर्णकरीविगुणविशिष्टेत्यर्थः । अत्र विशिष्टविधानासंभवे हेतुमाह–**दधीत्यादिना** । **तत्संसृष्टं प्राजापत्यमिति** । तैर्दध्यादिभिर्द्रव्यैर्युक्तं प्रजापतिदेवताकं कर्मेत्यर्थः । **तद्विशिष्टेति** । निरुक्तगुणविशिष्टेत्यर्थः । दध्यादिप्रकृतवाक्यस्थेनैतत्कर्मणः उत्पत्तिवाक्यवादस्य कर्मण उपस्थितिविशिष्टदध्यादिगुणावरुद्धत्वात् तत्र गुणान्तरं विधातुं शक्यत इति भावः । अत्र दध्यादिवाक्ये दध्यादीनि पञ्च द्रव्याणि गुणत्वाधायकानि उदकपदं तु प्रम दादायातम्, श्रुतिनानार्थादैरभिधवाक्यदेशस्यैतस्य वाक्यस्य व्याख्यातत्वात् । तथाच तद्दर्शने "दध्यादीनि विविधानि देयद्रव्याणि

प्राजापत्य' (१) मित्यनेन गुणस्य विहितत्वात्तद्विशिष्टयागविध्यनुपपत्तेः । यागस्य फलसंबन्धे गुणसंबन्धे च विधीयमाने वाक्यभेदः । तस्माच्चित्राशब्दः कर्मनामधेयम् । तथाच चित्रायागेन पशुं भावयेदिति

by the sentence, "The sacrifice in honour of PRAJĀPATI is accompanied by curds, honey, milk, ghee, barley, water, and rice". If it were the relation of the sacrifice with the fruit and the subsidiary thing that is enjoined, there would result Diversity of Statements. Consequently, the word CHITRĀ is (decided to be) the designation of the rite. In this way, there results no Diversity of Statements owing (to the word CHITRĀ) being construed as standing in grammatical co-ordination (with the word YĀGA)—One

---

'पञ्चाम्नातानी''ति । **नन्वत्र** वाक्ये ह्युत्पत्तिवाक्यासिद्धस्वरूपस्य यागस्य पशुरूपफलसंबन्धो विचित्रद्रव्यरूपगुणसंबन्धश्च विधीयते । ततश्च न कर्मनामधेयत्वं चित्राशब्दस्येत्याशङ्क्याह—**यागस्येति** । तथाच यागेन पशुं भावयेद्यागं च तादृशगुणेन भावयेदिति यागस्य गुणफलोभयसंबन्धे विधीयमाने सत्यावृत्तिलक्षणो वाक्यभेदो दुर्वार इति भावः । उपपादितं वाक्यभेदप्रसङ्गमुपसंहरति—**तस्मादिति** । सिद्धे चित्राशब्दस्य कर्मनामधेयत्वे वाक्यं योजयति—**तथाचेति** । **सामानाधिकरण्येनेति** निधात्वर्थयागसामानाधिकरण्येन नामधेयस्यान्वयाभिधानाचित्रानामकेन यागेन पशु भावयेदित्याकारकान्न निरुक्तवाक्यभेदापत्तिरित्यर्थः । **अनेकद्रव्यत्वेनेति** दध्यादिविविधानेकद्रव्यसाध्यत्वेनेत्यर्थः । **ननु** चित्राशब्दाच्चित्रत्वस्त्रीत्वयोः प्रतीतेः स्त्रीत्वस्य च स्वभावतः प्राणिधर्मत्वात्प्रकृते दध्यादिद्रव्यके कर्मणि निवेशासंभवात्तेन वाक्येन प्रकृते कर्मणि तादृशगुणविधानं क्रियते किंतु प्राणिद्रव्यके कर्मणि । अनारभ्याधीतानां चाङ्गानां प्रकृतिमात्रे प्रवेशाङ्गीकारात् चित्रावाक्यस्याप्यनारभ्याधीतत्वात्सर्वपशुयागप्रकृतिभूते प्राणिद्रव्यकेऽग्नीषोमीये कर्मणि तेन गुणो विधीयते । तथाच 'अग्नीषोमीयं पशुमालभेते'ति विहितं पशुयागमत्र वाक्ये यजेतेति पदेनानूद्य तत्र चित्रापदेन चित्रत्वस्त्रीत्वरूपौ गुणौ विधीयेते इति चेन्न । चित्रत्वेन स्त्रीत्वेन च [illegible] भावयेदिति द्वयोर्गुणयोर्विधाने वाक्यभेदप्रसङ्गात् । प्राप्ते कर्मण्यनेकगुणविधाने वाक्यभेदप्रसङ्गस्य सर्वसंमतत्वात् । तथाचोक्तम्—'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयेरन्बहवोऽप्येकयत्नतः' इति ॥

नन्वत्र वाक्यभेदपरिहाराय गुणद्वयविशिष्टं पशुद्रव्यरूपं कारकं विधीयत इति चेन्न । गौरवलक्षणवाक्यभेदप्रसङ्गात् । किंच दध्यादिद्रव्यकं प्रकृतस्य चित्रानामकस्य यागस्योत्पत्तिवचनं भवति । यागस्वरूपभूतयोर्दध्यादिद्रव्यप्रजापतिदेवतयोरत्रोपदिश्यमानत्वात् । उत्पन्नस्य च तस्य यागस्य 'चित्रया यजेत पशुकामः' इत्येतत्फलवाक्यमत्र यागस्य फलसंबन्धबोधनात् ।

सामानाधिकरण्येनान्वयान्न वाक्यभेदः । प्रकृतेष्टेरनेकद्रव्यत्वेन चित्राशब्दवाच्यत्वोपपत्तिः ।

(५६)

'अग्निहोत्रं जुहोती' त्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात् । तस्य गुणस्य प्रख्यापकस्य ज्ञापकस्य शास्त्रस्य विद्यमानत्वात् अग्निहोत्रशब्दः कर्मनामधेयमिति यावत् । नन्वयं गुणविधिरेव कुतो नेति चेन्न । यद्यग्नौ होत्रमस्मिन्निति सप्तमीसमासमाश्रित्य होमाधारत्वे-

should realise cattle by means of the CHITRÂ sacrifice. Owing to many substances being used in the sacrifice under consideration there is a propriety in its being styled as CHITRÂ (Diverse)

(56)

In the sentence "One should offer the AGNIHOTRA," the word AGNIHOTRA is (assumed to be) the designation *of the sacrifice, in view of the fact that there is (another)* text to describe the subsidiary thing (TAT). What is meant is that owing to the existence of a text describing, *i e*, enforcing that, *i e*,, the subsidiary *thing*, the word AGNIHOTRA is (to be interpreted as) the designation of the sacrifice. If one asks, "Why should this not be (regarded) as an injunction of a subsidiary thing," we reply, "It cannot be. If, by assuming the word as a Locative Compound to be explained as a sacrifice in which oblations are offered in fire, (one urges) that it is the subsidary thing,

---

एवंच सति प्रकृतार्थो लभ्येत । अमात्रोर्मोर्यप्रनुवादेन सादृशगुणविधाने तु प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येतां, लिङ्प्रत्ययस्य चानुवादित्वाद्भावनान्तराद्यनुगयो विध्यर्थो बाध्येत, तस्माच्चित्रापदं नामधेयमेव न गुणविधिरिति ध्येयम् ।

इदानीं तत्प्रख्यशास्त्ररूपात्तृतीयनिमित्तान्नामधेयत्वमग्निहोत्रशब्दस्य प्रदर्शयति—अग्निहोत्रमिति । 'तत्प्रख्यं चान्यशास्त्र' मिति हि तत्प्रख्यशास्त्रसूत्रम् । तस्य फलितार्थमाह—तस्येत्यादिना ।

नन्वग्निहोत्रं जुहोतीत्यत्राग्निरूपस्य गुणस्यैव विधिर्न नामधेयत्वमग्निहोत्रशब्दस्य स्वीकर्तव्यमित्याशङ्कते—नन्वयमिति । यद्यत्र सप्तमीसमासमाश्रित्य होमाधारत्वेनाग्निरूपस्य

नाग्निरूपो गुणो विधेयस्तदा 'यदाहवनीये जुहोती' त्यनेनैवार्थः प्राप्तत्वात्तद्विधानानर्थक्यम् । अग्नये होत्रमिति चतुर्थीसमासमाश्रित्य अग्निदेवतारूपगुणोऽनेन विधीयत इति चेन्न । तद्देवतायाः शास्त्रान्तरेण प्राप्तत्वात् ।

( ५७ )

किं तच्छास्त्रान्तरमिति चेत् । 'यदग्नये च प्रजापतये च सायं जुहोती' (मैत्रायणी सं॰ १-८-७) ति केचित् । अपरे तु 'अग्निर्ज्योतिर्ज्योतिरग्निः

viz., fire that is enjoined (in the sentence) as the abode of the sacrifice, this would result in the futility of the injunction relating to fire which is established by (the other text', "When he offers the oblations in the AHAVANĪYA". If, (again) someone were to urge, assuming the word as a Dative Compound, and explaining it as an oblation to Agni, that the sentence enjoins the subsidiary thing, viz, Agni the deity, we demur. For, that deity is established by a different text

( 57 )

If one asks, " What is that different text ?," we reply : According to some, it is the passage, "That he offers to Agni & Prajāpati an oblation in the evening" while according to,

---

गुणस्य विधानं स्वीक्रियते तदा तदाधारत्वेनाग्निरूपस्य गुणस्य वाक्यान्तरेण प्राप्तत्वात्तेन तद्विधानस्यानर्थक्यमापद्येतेत्याह—यद्यग्नावित्यादिना । चतुर्थीसमासमाश्रित्याग्निदेवतारूपस्य गुणस्य विधानमाशङ्कते—चतुर्थीत्यादिना । नात्र देवतारूपेणाग्निरूपस्य गुणस्य विधानमुपपद्यत इति समाधत्ते—नेति । तत्र हेतुमाह—तद्देवताया इति । अग्निरनतच्छब्दार्थं ।

देवतारूपेणाग्निप्रापकं शास्त्रं पृच्छति—किमिति । केषाचिन्मतानुसारेणोत्तरमाह—यदग्नये चेति । अत्राग्निर्ज्योतिरित्यादिमन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवं तदुभयसमुच्चितस्यैवात्र विधाने गौरवमिति न समुच्चितोभयविधानं 'यदग्नये च प्रजापतये च सायं जुहोती' त्यत्र स्वीकर्तव्यमित्यस्वरसबीजं केचिदित्यनेन सूचितम् । अधुना सिद्धान्तमतेनोत्तरमाह—अपरे त्विति । किंच 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती' ति विहितेन मन्त्रेण प्राप्तमग्निमनूद्य तत्समुच्चितस्य प्रजापतेः 'यदग्नये च प्रजापतये च सायं जुहोती' त्यत्र सायंकालेऽग्निहोत्रदेवतात्वं विधीयते । 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोती' ति विहितेन च मन्त्रेण प्राप्तं सूर्यमनूद्य तत्समुच्चितस्य च तस्य 'यत्सूर्याय

स्वाहे' (मै. स. १-६-१०) ति मन्त्रवर्ण एवाग्निरूपदेवताप्रापकः । नन्वग्नेर्मान्त्रवर्णिकत्वे प्रजापतिदेवतया बाधः स्यात्। मन्त्रवर्णस्य चतुर्थीतो दुर्बलत्वात्। यथाहुः–'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः। देवताया विधिस्तत्र दुर्बलं तु परं पर'मिति (तन्त्रवार्तिक २-२-२३?) चेन्न। 'यदग्नये च प्रजापतये च सायं जुहोती' त्यत्र न केवलं प्रजापति-

विधानम् , किंतु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतेः । एवच न बाधः, केवलप्रजापतिविधानाभावात् । नचात्र समुच्चितोभयविधानमेव कथं नेति वाच्यम् । समुच्चितोभयविधानापेक्षयान्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात् ।

एवं प्रयाजेषु समिदादिदेवताना ' समिधः समिधो अग्न आज्यस्य व्यन्त्वि ' ( मै स ४-१०-३ ) त्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात् ' समिधो-यजती ' त्यादिषु समिदादिशब्दास्तत्प्रख्यशास्त्रात्कर्मनामधेयम् ।

(५८)

' श्येनेनाभिचरन्यजेते ' त्यत्र ( षड्विंश ब्रा ३-८-२ ) श्येनशब्दस्य

side by side with a reiteration of Agni obtained from the incantation Thus there arises no annulment for it is not only Prajapati that is enjoined It should not be urged ' How is it that here we have no injunction of both only as combined? For it is less labourious (LAGHAVA) to enjoin only Prajapati and, side by side to *reiterate* Agni than to *enjoin both* together

Similarly the deities like the SAMIDH etc in the PRAYAJAS being obtained from incantations such as O Agni let firesticks after firesticks relish the ghee , words like SAMIDH in sentences like SAMIDHO YAJATI are (assumed to be) designations of the particular rites in view of the (separate) texts existing to describe them (i e the deities)

( 58 )

In the sentence One who intends to practise black magic (ABHICHARAN) should perform the SHYENA the word

---

परतु न तथा विधान क्रियत इति परिहरात--**यदग्नय चेत्यादिना** प्रजापतेरेयत्र विधान मित्यस्यानुषङ्ग । **एवचेति** । मन्त्रवर्णप्राप्तमग्निमनूद्य त समुच्चितस्य प्रजापतेर्विधानेचेत्यर्थ । **न बाध इति** । न प्रजापतिनाग्नेर्बाध इत्यर्थ । तत्र हेतमाह--**केवलेति** । **ननु** यदग्नये च प्रजापतये च यस्मिन्नाग्नये होमानुवादेन समुच्चितस्यैवोभयस्य विधान क्रियत इति कथ न स्वीक्रियत इत्याशङ्क्य तया समुच्चितयोर्विधानापेक्षया मन्त्रवर्णत प्राप्तमग्निमनूद्य लाघवेन त समुच्चितप्रजापतेर्विधानमत्रोचितमिति परिहरति **नचेत्यादिना** । तत्प्रख्यशास्त्रान्नामधेयत्व उदाहरणान्तरमाह-**एवमिति** । समिदादिशब्दा इत्यत्रादिपदेन तनूनपातादय शब्दा गृह्यन्ते ।

इदानीं चतुर्थनिमित्तेन तद्व्यपदेशरूपेण श्येनशब्दस्य कर्मनामधेयत्व प्रदर्शयति--**श्येनेति** ।

कर्मनामधेयत्वं तद्व्यपदेशात् । तेन व्यपदेशादुपमानात्तदन्यथानुपपत्तेरिति यावत् । तथाहि यद्विधेयं तस्य स्तुतिर्भवति । यद्यत्र श्येनो विधेयः स्यात्, तदर्थवादस्तस्यैव स्तुतिः कार्या । अत्र 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त' (षड्विंश ब्रा ३-८-२) इत्यनेनार्थवादेन श्येनः स्तोतुं न शक्यः श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात् । नच श्येनोपमानत्वेन स एव स्तोतुं शक्यते,

SHYENA is the name of the sacrifice, on account of comparison with that (*i e*, SHYENA a falcon) What is meant is that this is owing to VYAPADESHA *i e*, comparison which cannot be accounted for in any other way To explain Praise pertains to whatever is enjoined If the falcon were enjoined here, then the missionary passages will be praising that only In the present instance, the missionary assertion "Just as a falcon swooping down catches (its prey), so this swoops down upon the hating enemy and catches him" cannot (be supposed as meant to) praise the falcon, For, here is praised by a comparison with the falcon a thing *different* (from the latter) It is not possible to praise the falcon itself by comparing it with itself Since, the

---

कर्मनामधेयत्वमिति । ननु श्येनशब्दस्य कर्मनामधेयत्वं न भवति, किंतु सोमयागे नित्यं सोमद्रव्यं बाधित्वा तस्य स्थाने पक्षिद्रव्यरूपो गुणः कामाय विधीयते, तथा सति श्येनशब्दस्य पक्षिणि लोकप्रसिद्धा हानिरस्या भवतीत्याशङ्क्य श्येनशब्दस्य कर्मनामधेयत्वे हेतुमाह—तद्व्यपदेशादिति । तद्व्यपदेशात्पदं व्याचष्टे—तेनेति । श्येनेनेत्यर्थः । तदिति । उपमानोपमेयभावस्य भेदघटितत्वादर्थवादवाक्ये श्येनोपमानेन विधेयस्तुतौ श्येननामकपक्षिविशेषं विनानुपपत्तेर्न पक्षिद्रव्यरूपो गुणो विधातुं शक्यत इति भावः । तदन्यथानुपपत्तिमेवोपपादयति—तथाहीत्यादिना । यद्विति । विधेयस्य स्तुतेः कर्तव्यत्वादित्यर्थः । अत्रेति । श्येनेनाभिचरन्यजेतेत्यत्रेत्यर्थः । श्येन इति श्येननामकपक्षिविशेष इत्यर्थः । तस्यैवेति । श्येननामकपक्षिविशेषस्यैवेत्यर्थः । यथेति । यथा श्येनः पक्षिविशेषो निपत्य मत्स्यादीनादत्ते एवमयं श्येननामको यागो द्विषन्तं भ्रातृव्यं शत्रुं निपत्यादत्त इत्यर्थः । यमभिचरति श्येनेनेति धात्वर्थः । अत्रेति । अत्र प्रकृतेऽनेन श्येनार्थवादेन श्येनः पक्षिविशेष एव स्तोतुं न शक्यत इत्यर्थः । तत्र हेतुमाह—श्येनेति । ननु श्येनार्थवादोपमानेन श्येन एव पक्षिविशेषः कथं न स्तोतुं शक्यः स्यादित्यत आह—नच श्येनोपमानत्वेनेति । तदशक्यत्वे

उपमानोपमेयभावस्य भिन्ननिष्ठत्वात् । यदा तु श्येनसंज्ञको यागो विधीयते तदार्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्तुं शक्यत इति श्येनशब्दः कर्मनामधेयं तद्व्यपदेशादिति ।

5th Reason (५९)

उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं नामधेयनिमित्तमिति केचित् । यथा 'वैश्वदेवेन यजेत' (तै ब्रा १-४-१०-१) त्यादौ । अत्रोत्पत्ति-

relation of standard and object of comparison abides in things that are different When however a *sacrifice* called SHYENA is enjoined then can the missionary assertion praise it by comparing it with the falcon Thus the word S'HYENA is a designation owing to comparison with it (i e the falcon)

(59)

Some hold that the greater strength of the subsidiary enjoined ( S HISHTA ) in an originative injunction is the fifth circumstance for ( interpreting certain words as ) designations as, in cases like One should offer the VAIS H VADEVA ' Here, because, Agni and the other gods

---

हेतुमाह—**उपमानेति** । यदत्र श्येनसंज्ञकस्य यागस्य विधेयत्वं स्वीक्रियते तदा तादृशार्थवादोपमानेन तस्य श्येनसंज्ञकस्य यागस्य स्तुतिः कर्तुं शक्या भवत्येवेत्याह—**तदेत्यादिना** । फलितमुपसंहरति—**इतीति** । एवमुक्तेन प्रकारेणेत्यर्थः ।

अत्र कर्मनामधेयत्वे चोत्पत्तिशिष्टगुणबलीयस्त्वं पञ्चममपि निमित्तं भवतीति केषांचिन्मतमाह—**उत्पत्तिशिष्टेति** तत्रोदाहरणमाह—**यथेति** । **अत्रेति** । अस्मिन्वाक्ये वैश्वदेवशब्दस्य विश्वेदेवदेवताविधायकत्वं न संभवत्युत्पत्तिशिष्टाग्न्यादीनां बलीयस्त्वादित्यन्वयः । फलितार्थमुपसंहरति—**इतीति** । तस्येति शेषः । अयं भावः—चातुर्मास्ये चत्वारि पर्वाणि—वैश्वदेवो वरुणप्रघासाः साकमेधाः शुनासीरीयश्चेति । तेषु प्रथमे पर्वण्यष्टौ यागा विहिताः—आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालमिति । तेषामष्टानां यागानां संनिधाविदमाम्नायते—**वैश्वदेवेन यजेतेति** । अत्र चाग्नेयादीन्यागानेतेत्यनूद्य वैश्वदेवशब्देन देवतारूपो गुणस्तेषु विधीयते । यद्यपि वैश्वदेव्यामामिक्षायां विश्वेदेवाः प्राप्तास्तथाप्याग्नेयादिषु सप्तसु यागेष्वप्राप्तत्वाद्विधीयन्ते । तेष्वप्यग्न्यादिदेवताः सन्तीति चेत्तर्हि गत्यभावात्तेषु देवता विकल्प्यताम् । नामधे-

९

शिष्टाग्न्यादीनां बलीयस्त्वाद्वैश्वदेवशब्दस्य विश्वदेवदेवताभिधायकत्वं न संभवतीति कर्मनामधेयत्वम् । वस्तुतस्तु तत्प्रख्यशास्त्रादेवास्य कर्मनामधेयत्वम् । प्रकृतयागे विश्वदेवरूपगुणसंप्रतिपन्नशास्त्रस्यार्थवादरूपस्यैव सत्त्वात् । 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' (तै ब्रा. १-४-१०-५) इति ।

enjoined by the injunction of origination are stronger, the word VAIS HVADEVA cannot express the deity VIS'H-VADEVA , therefore it must be the name of the sacrifice. But the truth is that this is determined to be the name of the sacrifice on the basis of the ( separate ) text describing it ( *i e* the deity ) For, there is the text in the form of the missionary assertion "The VAIS HVADEVA is so called because the VIS HVEDEVAS offered it ", which is acknowledged as furnishing the subsidiary of the deity viz. VIS HVADEVA , in the sacrifice under consideration

---

यत्वे तु नाममात्रस्याविधेयत्वादन्यदेवतयोरभावेन यागस्यात्र स्वरूपासंभवाच्छ्रूयमाणो विश्वेदे-वैक स्यात्तस्माद्गुणविधिरिति पूर्वपक्ष । उत्पत्तिवाक्यैर्विहितानामाग्नेयादीनष्टौ यागानन्यजेत यनूद्या ष्टाना सङ्घे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते । नच विधित्वाभावेऽपि नामापदेशस्य वैयर्थ्यमिति वाच्यम् । 'प्राचीनप्रव ो वैश्वदेवेन यजेते' त्यादिषु वैश्वदेवशब्देनैकत्वेनाष्टानां सङ्घस्य व्यवहर्तव्यत्वेनार्थवत्त्वोपपत्ते । नामप्रवृत्तिनिमित्तभूता निरुक्तिस्तु द्विधा । आमिक्षायागे विश्वेषां देवाना मिज्यमानतया तत्सहचरितानां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वमिति, विश्वेदेवा अष्टानां कर्तार इति वा तेषां वैश्वदेवत्वम् । तथाच ब्राह्मणं 'यद्विश्वेदेवा समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्व मिति । देवताविकल्पस्तु समानबलत्वाभावान युज्यते, अग्न्यादय उत्पत्तिशिष्टत्वात्प्रबला विश्वे देवा उत्पन्नशिष्टत्वाद्दुर्बला तस्माद्वैश्वदेवशब्द कर्मनामधेयमिति सिद्धान्त । वस्तुगतिमाश्रित्य तत्प्रख्यशास्त्रादेव वैश्वदेवशब्दस्य कर्मनामधेयत्वमाह—वस्तुतस्त्विति । प्रकृतयाग इति । वैश्वदेवनामकेऽष्टानामाग्नेयादीनां सङ्घात्मके प्रकृतयाग इत्यर्थ । विश्वदेवेति । प्रकृतयागे विश्वदेवरूपगुण संप्रतिपन्न संप्राप्ता यस्मात्तादृशशास्त्रस्येत्यर्थ । तत्र गुणप्रापक शास्त्रमुदाहरति—यद्विश्वदेवा इति । अस्य शास्त्रस्य कर्तृत्वेन प्रकृते यागे विश्वदेवरूपगुणप्रापकत्वमिति भाव । नामधेयस्य प्रयोजन तु सर्वत्र व्यवहार एव । नह्यन्तरेण नामधेयमुच्चिस्मरणादिष्वनेनादं यस्य इत्याख्यानोपायो लघु कश्चिदस्ति, तस्माद्वैश्वदेवादिशब्दानां कर्मनामधेयत्वमेवेति सिद्धम् ।

(६०)

पुरुषस्य निवर्तकं वाक्यं निषेधः, निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिजनकत्वेनैवार्थवत्त्वात् । तथाहि यथा विधिः प्रवर्तनां प्रतिपादयन्स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेरिष्टसाधनत्वमाक्षिपन्पुरुषं तत्र प्रवर्तयति, तथा 'न कलञ्जं भक्षयेत्' (?) इत्यादिनिषेधोऽपि निवर्तनां प्रतिपादयन्स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य परानिष्टसाधनत्वमाक्षिपन्पुरुषं ततो निवर्तयति ।

(60)

Prohibition is a sentence that makes a man abstain (from doing a thing), since, Prohibitory sentences are useful only in so far as they produce abstention from actions that are a source of evil To explain As Injunction which inculcates an inclination inclines a person, suggesting to him, in the capacity of an agency that inclines, that sacrifice etc. that are enjoined are a means to something auspicious, so Prohibition like "One should not eat poisoned meat", (KALAÑJA) inculcating abstention makes a person abstain from eating poisoned meat, suggesting to him, in the capacity of an agency that makes one abstain, that the eating of poisoned meat, which is to be prohibited, is the source of the worst evil

---

सदेव मत्वर्थलक्षणादिनिमित्तचतुष्टयनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकतयार्थवत्त्वं निरूपितम् । अधुना निषेधवाक्यानामर्थवत्त्वनिरूपणाय निषेधवाक्यं लक्षयति-**पुरुषस्य निवर्तकमिति । निषेधोति ।** 'न कलञ्जं भक्षयेत्' इत्यादिनिषेधवाक्यानामनर्थहेतुभूताया-कलञ्जभक्षणादिक्रियायाः सकाशात्पुरुषस्य निवृत्तिजनकत्वेनैवार्थवत्त्वं न किंचित्कर्तव्यताप्रतिपादकत्वेनेति भाव । यथा विधिवाक्यानां स्वप्रवर्तकत्वान्यथानुपपत्त्या विधेयार्थस्य स्वर्गादिरूपेष्टसाधनत्वप्रत्यायनेन तत्र विधेयार्थे पुरुषप्रवृत्तिजनकत्वं तथा निषेधानामपि स्वनिवर्तकत्वान्यथानुपपत्त्या निषेध्यस्य पुरुषानिष्टसाधनत्वप्रत्यायनेन, ततः कलञ्जभक्षणादेः पुरुषनिवृत्तिजनकत्वमिति दृष्टान्तदार्ष्टान्तिकाभ्यां निषेधवाक्यानामनर्थहेतुक्रियायाः पुरुषनिवृत्तिजनकत्वेनैवार्थवत्त्वमुपपादयति—**तथाहीत्यादिना ।**

(६१)

ननु निषेधवाक्यस्य कथं निवर्तनाप्रतिपादकत्वमिति चेदुच्यते । न तावदत्र धात्वर्थस्य नञर्थेनान्वयः, अव्यवधानेऽपि तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः । नह्यन्योपसर्जनत्वेनोपस्थितमन्यत्रान्वेति । अन्यथा राजपुरुषमानयेत्यादावपि राज्ञः क्रियान्वयापत्तेः । अतः

(61)

If it be asked, "How does the prohibitory sentence inculcate abstention," we reply as follows So far as the radical sense is concerned, it is not connected here with the sense of the negative, for, though the sense of the negative stands in proximity (to the radical sense), still the latter exists as subservient to the creativity signified by the suffix. For, whatever is subservient to one does not enter into connection with another Otherwise, even in a sentence like "Bring the King's Officer", the King will have to be connected with the action (of bringing) Hence only the sense of the suffix is connected with the sense of the negative There too, it is not the Purposive Creativity

---

**ननु** निषेधवाक्यानां निवर्तनाप्रतिपादकत्वं न सम्भवति, न भक्षयेत् हन्तव्य इत्येवमादौ व्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये सति धात्वर्थवर्जनकर्तव्यताया एव सर्वत्र वाक्यार्थत्वेन प्रतीयमानत्वात् । तथाच यथा यजेतेत्यादौ यागकर्तव्यता वाक्यार्थो भवति तथा 'न कलञ्जं भक्षयेत्' 'ब्राह्मणो न हन्तव्यः' इत्यादावपि तत्तद्धात्वर्थवर्जनकर्तव्यतैव वाक्यार्थो न निवर्तनेत्याशयेनाशङ्कते—**नन्विति** । नञर्थस्याभावस्य धात्वर्थेनाव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितत्वान्न नञर्थेनान्वयः सम्भवति । अन्यत्रोपसर्जनत्वेनान्वितस्यान्यत्रोपसर्जनत्वेनान्वयायोगादिति परिहरति—**उच्यत इत्यादिना** । **अत्रेति** । 'न कलञ्जं भक्षयेत्' इत्यादावित्यर्थः । अव्यवधानेऽपीत्यत्र धात्वर्थस्य नञर्थेनेत्यनुषङ्गः । **तस्येति** । धात्वर्थस्येत्यर्थः । अन्योपसर्जनत्वेनोपस्थितस्याप्यन्यत्रोपसर्जनत्वेनान्वये को दोष इत्यत आह—**नहीति** । तत्र बाधकं दोषमाह—**अन्यथेति** । अन्यविशेषणत्वेनोपस्थितस्याप्यन्यत्रविशेषणत्वेनान्वयस्वीकारे पुरुषोपसर्जनत्वेनोपस्थितस्य राज्ञोऽपि क्रियोपसर्जनत्वेनान्वयोपपत्तेरित्यर्थः । धात्वर्थस्य नञर्थेनान्वयासम्भवात्कलञ्जादिपदार्थस्यापि कारकोपसर्जनत्वेनोपस्थितस्य तत्रान्वयासम्भवाच्च परिशेषात्प्रत्ययार्थस्यैव नञर्थेनान्वयो भवतीत्याह—**अत इति** । किंच प्रत्ययार्थोऽपि द्विविधो भवत्याख्यातत्वांशवाच्यार्थभावना लिङंशवाच्या शब्दभावना चेति, तयोर्मध्येऽपि नाख्यातत्वांशवाच्यभूताया अर्थभावनाया नञर्थेऽन्वय सम्भवतीत्याह—**तत्रापीति** ।

प्रत्ययार्थस्यैव नञर्थेनान्वयः । तत्रापि नाख्यातत्वांशवाच्यार्थभावनायास्तस्या लिङंशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितेः, किंतु लिङंशवाच्यशब्दभावनायाः, तस्याः सर्वापेक्षया प्रधानत्वात् ।

नञश्चैष स्वभावो यत्स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम् । यथा घटो नास्तीत्यादौ अस्तीतिशब्दसमभिव्याहृतो नञ् घटसत्त्वविरोधि घटा-

*expressed by the verb-element (that is connected with the sense of the negative),—for, it exists as subservient to the inclination expressed by the sense of the Potential,—but the Verbal Creativity expressed by the element of the Potential, for, it stands supreme in relation to all*

And it is the nature of the Negative that it conveys the antithesis of the sense of the word along with which it is stated. As in the sentence "There is no jar", the negative stated along with the word "is" conveys the non-existence of the jar, which is antithetical to its existence, so (TAT), in the instance under consideration, the negative stated

---

तत्र हेतुमाह—तस्या इति । प्रवर्तनोपसर्जनत्वेनेति । शब्दभावनाविशेषणत्वेनेत्यर्थः । लिङंशवाच्येत्यस्य लिङो योऽंशो लिङ्त्वरूपो धर्मस्तद्वाच्येत्यर्थो बोध्यः । एवमग्रेऽपि । ननु 'न कलञ्जं भक्षयेत्' इत्यादौ कलञ्जादिपदार्थस्य धात्वर्थस्य च नञर्थेनान्वयो भवतीति निरस्तः, प्रत्ययार्थस्याप्यर्थभावनारूपस्य नञर्थेनान्वयानङ्गीकारे प्रत्ययार्थत्वाविशेषाच्छब्दभावनाया अपि तेनान्वयासंभवेनानन्वितशब्दस्याप्रामाण्यप्राप्तिरित्याशङ्क्य परिहरति—किंत्विति । तत्र हेतुमाह—तस्या इति । प्रत्ययार्थत्वं न नञर्थेनान्वये प्रयोजकं किंतु सर्वापेक्षया मुख्यत्वेनोपस्थितत्वं, तच्च शब्दभावनायामबाधितमिति भावः ।

एवं शब्दभावनारूपस्य प्रत्ययार्थस्य प्रवर्तनाविशेषस्य नञर्थेनान्वये सिद्धे नञः प्रत्ययार्थभूतप्रवर्तनाविरोधिनिवर्तनाबोधकत्वप्रदर्शनाय प्रथमं तत्स्वभावं प्रदर्शयति—नञश्चैष स्वभाव इति । अत्र स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वं स्वान्वितपदार्थविरोधिबोधकत्वं बोध्यम् । तेन कलञ्जादिपदार्थानामपि विरोधिबोधकत्वं नञो दुर्वारं स्यात्तेषामप्येकत्र सहपाठरूपसमभिव्याहारस्य सत्त्वादिति निरस्तम् । तेषां नञान्वितपदार्थत्वाभावस्य दर्शितत्वेन नञस्तद्विरोधिबोधकत्वासंभवात् । नञः स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वं दृष्टान्तेन स्पष्टयति—यथेत्यादिना । घटसत्त्वविरोधीति । नास्तीत्युक्ते कस्यासत्त्वमस्तीतिशब्दसमभि-

सत्त्व गमयति तदिह लिङ्समभिव्याहृतो नञ् लिङर्थप्रवर्तनाविरोधिनीं निवर्तनामेव बोधयति । विधिवाक्यश्रवणेऽयं मां प्रवर्तयतीति प्रतीतेः । तस्मान्निषेधवाक्यस्थले निवर्तनैव वाक्यार्थः । यदा तु प्रत्ययार्थस्य तत्रान्वये बाधकं तदा धात्वर्थस्यैव तत्रान्वयः ।

along with the Potential conveys only abstention, the antithesis of inclination which is the sense of the Potential, as is gathered from the apprehension (one gets) on hearing an injunctory sentence that the enjoining person (AYAM) *inclines* him (i e the hearer) (towards a particular thing) Therefore, in the case of a sentence of prohibition abstention alone is the sense of the sentence When, however, there is a circumstance coming in the way of (BADHAKA) the connection of the sense of the suffix with it (i e the sense of the negative), then it is the radical sense itself that is to be connected therewith

---

ननात्र बोध्यते इति सत्त्वनिरूपणानाकाङ्क्षाया सत्त्वाद्युपनिरूपितसत्त्वविरोधीत्यर्थ । इदानीं नञ स्वभावप्रदर्शनस्य फल दर्शयति–तदिति । तत्रेत्यन्वय । तत्प्रदर्शितस्वभाव नञित्यर्थ इहेति । 'न कलञ्ज भक्षयेत्, ब्राह्मणो न हन्तव्य' इत्यादौ वाक्य इत्यर्थ ननु लिङ प्रवर्तनाप्रतिपादकत्वे सिद्धे तत्समभिव्याहृतनञस्तदर्थप्रवर्तनाविरोधिनिवर्तनाप्रतिपादकत्व सेत्स्यति तदेव कुत इत्याशङ्क्य तत्र हेतुमाह––विधीति । प्रतीतेरिति । प्रवर्तनाप्रतीतेरित्यर्थ । यद्वा 'यजेत स्वर्गकाम' इति विधिवाक्यश्रवणेऽय मां प्रवर्तयतीति प्रवर्तनाप्रतीतिवत्, 'न कलञ्ज भक्षयेत्' दित्यादिनिषेधवाक्यश्रवणेऽप्यय मां निवर्तयतीति निवर्तनाप्रतीतेरित्यध्याहारेण विधीत्यादिहेतुवाक्य दृष्टान्तदार्ष्टान्तिकविधया योजनीयम् । एव सिद्ध निवर्तनारूप निषेधवाक्यार्थमुपसहरति––तस्मादिति । 'न कलञ्ज भक्षये' दित्यत्र कलञ्जकर्मकभक्षणानुकूलपुरुषप्रवृत्तिजनकप्रवर्तनाप्रतिलिङर्थप्रवर्तनाविरोधिनिवर्तनैव वाक्यार्थ । एवमन्यत्रापि निषेधवाक्येषु सर्वत्र निवर्तनाया एव वाक्यार्थत्व विधिनिषेधयोर्भिन्नार्थत्वमप्युपपन्न भवति, हननादिवर्जनकर्तव्यतावाक्यार्थत्वपक्षे तु कर्तव्यताया एवोभयत्र प्रतिपाद्यत्वात्तयोरेकार्थत्व स्यात्तच्च न युक्तम् । यथाहु ––'अन्तर यादृश लोके ब्रह्महत्याश्वमेधयो । दृश्यते तादृगेवेह विधानप्रतिषेधयो'रिति । तस्मान्निवर्तनैव प्रतिषेधेषु वाक्यार्थ इति सिद्धम् । यदि तु प्रत्ययार्थस्य नञर्थेनान्वये किंचिद्बाधकं वर्तते तदा धात्वर्थस्यैव नञर्थेनान्वयो भवतीत्याह––यदा त्वित्यादिना ।

(६२)

तच्च बाधकं द्विविधम् । तस्य व्रतमित्युपक्रमो, विकल्पप्रसक्तिश्च । तत्राद्यं 'नेक्षेतोद्यन्तमादित्य' (मनु. ४-३७ ?) मित्यादौ तस्य व्रतमित्युपक्रम्यैतद्वाक्यपाठात् । तथा चात्र पर्युदासाश्रयणम् । तथाहि—व्रतशब्दस्य कर्तव्यार्थे रूढत्वात्तस्य व्रतमित्यत्र स्नातकस्य व्रतानां कर्तव्यत्वेनोपक्रमात् । किं तत्कर्तव्यमित्याकाङ्क्षायां नेक्षेतोद्यन्तमित्यादिना

(62)

Such a circumstance that comes in the way is of two kinds: (1) the beginning with the words "His vow" and (2) the contingency of option. Of these the first is (found) in sentences like "He should not look at the rising sun", for, this sentence is stated after a beginning is made with the words "his vow". And thus we have to admit Exclusion (PARYUDĀSA) in the present case. To explain: since the word "Vow" is conventionally used to denote a thing that is *to be performed*, with the words "His Vows" commence the vows to be performed by the SNĀTAKA. When there is the expectancy as to what is to be performed, the words "He should not look at the rising sun" ought to

---

तच्च बाधकं विभजते—**तच्चेति** । प्रत्ययार्थस्य नञर्थेनान्वये बाधकं चेत्यर्थः । **तत्राद्यमिति** । तयोरुक्तयोर्द्वयोर्मध्य आद्यबाधकमित्यर्थः । **तस्य व्रतमितीति** । तस्य स्नातकस्य ब्रह्मचारिविशेषस्य व्रतं प्रजापतिदेवताकमादित्यानीक्षणसङ्कल्पादिकं किंचिदनुष्ठेयमित्यर्थः । **एतद्वाक्यपाठादिति** । 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचने'त्येतद्वाक्यपाठादित्यर्थः । **तथा चेति** । तस्य व्रतमिति स्नातकस्यानुष्ठेयमुपक्रम्य "'नेक्षेतोद्यन्त' मित्यादिवाक्यपाठे चास्मिन्वाक्ये पर्युदास एव समाश्रीयत इत्यर्थः । किंच 'नेक्षेतोद्यन्तमादित्य'मित्यत्र नञ्पदमभिधावृत्त्या प्रतिषेधं ब्रूते ननु पर्युदासं, लक्षणापत्तेः प्रतिषेधस्य च प्राप्तिपूर्वकत्वाद्वैदिकस्य प्रतिषेधस्य वैदिकेनैव प्राप्तिस्तु प्रत्यासन्ना भवेत् । तथा च सति यत्र क्वचनादित्येक्षणं विहितं तत्रात्र प्रतिषेध उदयास्तमयोद्देशेन प्रवर्तते । एवं च सति नात्र फलं कल्पनीयं स्यात् । पर्युदासमाश्रित्य पुरुषार्थत्वाङ्गीकारे त्वधिकारसिद्धये फलस्य कल्पनीयत्वमापद्येत, तस्मादत्र क्रत्वर्थः प्रतिषेध इत्याशङ्क्य, तस्य व्रतमित्युपक्रम्य 'नेक्षेतोद्यन्त'मित्याद्याम्नातत्वाद्व्रतशब्दस्य च कर्तव्यरूपार्थे रूढत्वादत्र किंचिदनुष्ठेयमेव प्रतिभाति । तच्च पर्युदासाश्रयणे सत्येवोपपद्यते । किंचोपक्रमवाक्ये प्रतिज्ञातस्यैवार्थस्यात्रापि वक्तव्यत्वात्, उपक्रमवाक्ये तु स्नातकानुष्ठेयव्रतानामेव प्रतिज्ञातत्वात् कानि तानि व्रतानीत्यपेक्षायां स्नातकव्रतप्रदर्शनायास्य वाक्यस्यावतारादत्र कर्तव्य

कर्तव्यार्थ एव प्रतिपादनीयः । अन्यथा पूर्वोत्तरवाक्ययोरेकवाक्यत्वं न स्यात् । तथाच नञर्थेन न प्रत्ययार्थान्वयः कर्तव्यार्थानवबोधात् । विध्यर्थप्रवर्तनाविरोधिनिवर्तनाया एव तादृशनञा बोधात्, तस्याश्च

convey only such a thing as can be performed Otherwise there will be no coherence (EKAVĀKYATVAM) between the first and the later sentences Consequently, the sense of the suffix is not connected with the sense of the negative for, it (this connection) will not convey a thing to be done For, such a negative will only convey abstention the antithesis of inclination signified by an injunction and that (i. e. abstention) is not a thing to be performed There-

---

एव कश्चिदर्थो वक्तव्य, स च पर्युदासपक्षे लभ्यते निषेधपक्षे तु दुर्लभ एवेत्यभिप्रायेण पर्युदासपक्षमुपपादयति—**तथाहीत्यादिना** । नेक्षेतोद्यन्तमित्यादौ कर्तव्यरूपस्यार्थस्याप्रतिपादनीयत्वे बाधकमाह—**अन्यथेति** । **पूर्वोत्तरेति** । तस्य व्रतमिति पूर्ववाक्यं नेक्षेतोद्यन्तमित्याद्युत्तरवाक्यं च तयोरेकवाक्यत्वं बाध्यतेत्यर्थः । **ननु** 'नेक्षेतोद्यन्त' मित्यादौ भवतु कर्तव्यरूपार्थस्यैव प्रतिपादनं ततोऽपि कीं स्यादित्यत आह—**तथाचेति** । तथाच नेक्षेतोद्यन्तमित्यादौ कर्तव्यरूपार्थस्य प्रतिपादनीयत्वे च नञर्थेन प्रत्ययार्थान्वयावकाशो न भवतीत्यर्थः । **ननु** 'नेक्षेतोद्यन्तमादित्य' मित्यत्र नञर्थेन प्रत्ययार्थस्यान्वये को दोष इत्याशङ्क्य तत्र हेतुमाह—**कर्तव्येति** । नञर्थेन प्रत्ययार्थस्य तत्रान्वये तत कर्तव्यार्थानवबोधापत्तेरित्यर्थः । **ननु** प्रत्ययार्थान्वितस्य नञः कर्तव्यार्थावबोधकत्वानङ्गीकारे को बाधेऽनेना बोध्यत इत्यत आह—**विध्यर्थेति** । **तादृशनञेति** । प्रत्ययार्थान्वितेन नञेत्यर्थः । तादृशनिवर्तनैव कर्तव्यरूपार्थो भवतु को दोष इति मन्दाभिप्रायमाशङ्क्याह—**तस्याश्चेति** । निरुक्तनिवर्तनायाश्चेत्यर्थः । किंचैवं नञः प्रत्ययेनान्वयासंभवे प्रत्ययाद्व्यतिरिक्तो नञ् धातुना सह संबध्यते, धातुना नञः संबन्धे च न तस्य निषेधकत्वं संभवति विधायकसंबन्धस्यैव नञो निषेधकत्वात्, निषेधकत्वस्य विधायकत्वप्रतिबन्धकत्वात्, नामधातुभ्यां योगे तु नञो न निषेधकत्वं युक्तं तयोरविधायकत्वात् । यथाहु—'नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधकः । वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनाविति । तस्मान्नेक्षेतेत्यत्र नञो धातुना योगात्तु धात्वर्थेक्षणविरोधी कश्चनार्थः प्रतिपाद्यते । यद्यपि नञोऽभाव एव शक्तिः । तथाचेक्षणस्याभाव एव नञः शक्यार्थो लाघवात् न तु तद्विरोधी तस्याः भावघटितत्वेन गौरवापत्तेः । तदन्यतद्विरुद्धतदभावेषु नञिति स्मरणं तु प्रतीत्यभिप्रायं न शक्यत्वभिप्रायं तथापि नेक्षेतेत्यत्र प्रत्ययस्य नञा संबन्धात् नञुपस्थापकत्वेन च तेन प्रागुक्तः कश्चिदर्थो विधेयः स्वीकर्तव्यः । तत्र न तावत् ईक्षणाभावो विधातुं शक्यते, नञा तदभावबोधनात् । नापि तदभावो विधातुं शक्यते, अभाव

नेक्षेत इत्यत्र

कर्तव्यार्थत्वाभावात् । तस्मादित्यत्र नञा धात्वर्थविरोध्यनीक्षणसंकल्प एव लक्षणया प्रतिपाद्यते तस्य कर्तव्यत्वसंभवात् ।

आदित्यविषयकानीक्षणसंकल्पेन भावयेदिति वाक्यार्थः । तत्र भाव्याकाङ्क्षायाम् 'एतावता हैनसा वियुक्तो भवती' (?) तिवाक्यशेषावगतः पापक्षयो भाव्यतयान्वेति । एवंच पूर्वोत्तरयोरेकवाक्यत्वं निर्व-

fore, in "He should not look at the rising sun", the negative states, by implication, the thought of abstaining from seeing which is the antithesis of the radical sense, for that is possible to be performed

The sense of the sentence is "He should realise by the thought of not seeing the sun Then when there arises the expectancy about the thing to be realised, the destruction of sin made out from the remaining part of the sentence 'From so much sin does he get free" is to be construed as the thing to be realised Thus of course is fulfilled the coherence between the first and the later sentences It

---

स्याविधेयत्वात्, तस्मात्पर्युदासाश्रयणेन धात्वर्थेक्षणविरोधी कश्चनात्र विधानयोग्योऽर्थो नञा लक्षणया प्रतिपाद्येत, सच विधानयोग्यः पदार्थोऽनीक्षणसंकल्प एव तस्येक्षणविरोधित्वात्कर्तव्यत्वसंभवाच्च । ततश्च स एव संकल्पोऽत्रानुष्ठेयत्वेन विधीयत इत्यभिप्रायेण पर्युदासस्यावश्यकत्वाश्रयणादनन्तरितस्य नञो धात्वन्वयेन तदर्थविरोध्यनीक्षणसंकल्पप्रतिपादकत्वमुपसंहरति—**तस्मादिति** । **लक्षणयेति** । स्वसमभिव्याहृतपदार्थाभाव एव नञः स्वशक्यार्थो भवति । तथाच स्वसमभिव्याहृतधात्वर्थाभावं शक्त्या प्रतिपादयन् नञ् तदभावसंबन्धिनं तदर्थविरोधिनं लक्षणया प्रतिपादयत्येव तदभावतद्विरोधिनोः संबन्धस्य संभवात् । दृश्यते हि तेजोऽभावतमसोः संबन्धः । तथाचेोद्यन्तमस्तयन्तं चादित्यं नेक्षिष्य इत्येवंरूपः संकल्पोऽत्रानुष्ठेयत्वेन विधीयमानो नञा लक्षणया प्रतिपाद्यत इति भावः । **तस्येति** । अनीक्षणसंकल्पस्येत्यर्थः ।

पर्युदासपक्षे नेक्षेतोद्यन्तमादित्यमितीत्यस्य वाक्यस्यार्थं प्रदर्शयति—**आदित्येति** । यत्तु पर्युदासपक्षे फलस्यात्र कल्पनीयत्वमापादितं तदपि न, वाक्यशेषावगतस्य पापक्षयस्यैवात्र फलत्वसंभवादित्याशयेनात्र भाव्यान्वयं प्रदर्शयति—**तत्रेति** । अनीक्षणसंकल्पभावनाया मित्यर्थः । 'एनसः वियुक्तो भवतीति' पापेन विरहित इत्यर्थः । 'इत्थं नेक्षेतोद्यन्तमादित्यमित्यत्रानीक्षणसंकल्पस्यानुष्ठेयस्य प्रतिपादने तस्य व्रतमिति प्रक्रान्तव्रतोपक्रमवाक्यस्य नेक्षेतेत्याद्युत्तरवाक्येनैकवाक्यत्वमुपपन्नं भवति, पूर्वप्रतिज्ञातस्यैवोत्तरप्रतिपादनादित्याह—**एवमिति** । **ननु** धात्वर्थेक्षणविरोधिनो बहवः पदार्था अनुष्ठेया सन्ति, ततश्च कथमत्र वाक्येऽ-

इत्येव । नचात्र धात्वर्थविरोधिनः पदार्थान्तरस्यापि संभवात्कथमनीक्षणसंकल्पस्यैव भावनान्वय इति वाच्यम् । तस्य कर्तव्यताऽभावेन प्रकृते भावनान्वयायोग्यत्वात् ।

(६३)

द्वितीयं 'यजतिषु येयजामहं करोति नानुयाजेष्विति' (आप श्रौ सू ४-११-[illegible]) इत्यादावत्र विकल्पप्रसक्तौ तु पर्युदासाश्रयणात् ।

hould not be argued "When even a different thing is ossible as antithetical to the radical sense how is it that nly the thought of not seeing is construed with the reativity" For, as it (i e such a different thing) does ot possess the capacity to be performed, it is not suited or being construed with the creativity

(63)

The second circumstance (coming in the way of the negative being construed with the radical sense) is that when in sentences like "He should utter 'YE YAJĀMAHE' in sacrificial formulas but not in the ANUYĀJAS, owing to the contingency of Option Exculsion has to be admitted To explain If in this sentence, the sense of the suffix were

---

नीक्षणसंकल्पस्यैव भावनायां करणत्वेनान्वय स्वीक्रियत इत्याशङ्क्य परिहरति—**नचेत्या दिना** । यद्यपि पदार्थान्तराणां पटेन चक्षुषः पिधानादिरूपाणां धात्वर्थेक्षणविरोधित्वं संभवति, तथापि कायिकवाचिकव्यापारविशेषाणामत्राप्रतीयमानत्वान्मानसव्यापारस्य चाप्रतिवेधात्वरूप एव मानसव्यापारविशेषोऽत्र परिशिष्यत इत्यभिप्रेत्य तत्र हेतुमाह—**तस्येति** । पटादिना चक्षुषो पिधानादिरूपस्य पदार्थान्तरस्य कर्तव्यताभावेन कर्तव्यत्वेन विवक्षाऽसंभवेन सर्वक्रियाऽविनाभूतस्यैव धात्वर्थेक्षणविरोधिपदार्थान्तरस्य नेक्षेतेत्यादौ प्रकृते भावनान्वययोग्यत्वमुपपद्यते । तथाच धात्वर्थेक्षणविरोध्यनीक्षणसंकल्पस्यैवात्र भावनान्वययोग्यता संभवति, तस्य सर्वक्रियाऽविनाभूतत्वान्नतु तादृशपदार्थान्तरस्य तस्य सर्वक्रियाऽविनाभूतत्वासंभवादिति भावः । प्रत्ययार्थस्य नञर्थेनान्वये विकल्पप्रसक्तिरूपस्य बाधकस्य प्रतिषेधाविषयत्वेन पर्युदासगमकत्वप्रदर्शनाय तद्विषयमुदाहरति—**द्वितीयमिति** ।

अत्र पर्युदासाश्रयणाय विकल्पप्रसक्तिमनोपपादयति—**तथाहीत्यादिना** । **सचेति** । निषेधश्चेत्यर्थः । तत्र हेतुमाह—**प्राप्तत्वादिति** । **शास्त्रादेवेति** । ब्राह्मणहननादेरिव रागतः प्राप्त्यसंभवान्नास्य शास्त्रादेव प्राप्तिरित्यर्थः । तथापादितां विकल्पप्रसक्तिमुपपादयति—**शास्त्र-**

तथाहि यद्यत्र वाक्ये नञर्थे प्रत्ययार्थान्वयः स्यात्तदा अनुयाजेषु 'ये यजामहे' इति मन्त्रस्य प्रतिषेधः स्यात्, अनुयाजेषु येयजामहं न कुर्यादिति । सच प्राप्तिपूर्वक एव, प्राप्तस्यैव प्रतिषेधात् । प्राप्तिश्च 'यजतिषु येयजामहं करोती'ति शास्त्रादेव वाच्या । शास्त्रप्राप्तस्य च प्रतिषेधे विकल्प एव नतु बाधः । प्राप्तिमूलरागस्यैव तन्मूलशास्त्रस्य शास्त्रान्तरेण बाधायोगात् ।

connected with the sense of the negative, then in the case of the ANUYĀJAS there will be prohibition of the incantation YE YAJĀMAHE, to the effect that it should not be uttered in the case of the ANUYĀJAS And that (prohibition) necessarily presupposes establishment for, only, an established thing can be prohibited The establishment, it should be said, results from the text He should utter 'YE YAJĀMAHE' in sacrificial formulas And when there is a prohibition of a thing established by a text there results only an option but not an Annulment For annulment of one text which is the basis for the establishment, by another, as in the case of passion that forms the basis of establishment (which is however annulled by a text) is unreasonable[1]

---

प्राप्तस्येति । ननु यथा रागतो हननादौ प्रवृत्त पुरुष हननादिप्राप्तिमूलभूतरागस्य बाधेन ततो न हन्तव्य इत्यादिशास्त्रं निवर्तयति तथा 'यजतिषु येयजामहं करोती'ति शास्त्रादनुयाजेष्वप्यनुष्ठानकाले यजतित्वाविशेषादेव 'ये यजामहे' इति मन्त्रस्य समुच्चारणे प्रवृत्त पुरुष तत्प्राप्तिमूलभूतस्य प्रदर्शितशास्त्रस्य यजतिसामान्ये 'ये यजामहे' इति मन्त्रप्रापकशास्त्रस्यानुयाजेषु बाधेन ततो 'नानुयाजेषु येयजामहं करोती'ति शास्त्रं निवर्तयत्वेवेति कथं न शास्त्रप्राप्तस्य बाध स्यादित्यत आह—प्राप्तीति । शास्त्रेण बाध इति शेष । तन्मूलशास्त्रस्येति । 'ये यजामहे' इति मन्त्रप्राप्तिमूलशास्त्रात् 'यजतिषु येयजामहं करोती'त्येवंरूपाच्छास्त्रान्तरेण 'नानुयाजेषु येयजामहं करोती'त्येवंरूपेण प्रदर्शितमन्त्रप्राप्तिमूलभूतस्य प्रदर्शितशास्त्रस्य बाधायोगादित्यर्थ । दृष्टान्तस्त्वत्र व्यतिरेकी बोध्य । तथाच यथा हननादिप्राप्तिमूलरागस्य भ्रान्तिनिमित्तकस्य शास्त्रेण बाधो भवति तथा मन्त्रप्राप्तिमूलशास्त्राच्छास्त्रान्तरेण मन्त्रप्राप्तिमूलशास्त्रस्य बाधो न युक्तो निषेधशास्त्रस्य निषेध्यप्राप्तिसापेक्षत्वेन तत्प्रापकस्याबाधकत्वादित्यनुपदं स्पष्टीभविष्यति मूल इति भाव । यद्वा तन्मूलशास्त्रादिति पञ्चमी षष्ठ्यर्थे बोध्येति, तेनानुरक्तवि-

नच 'पदे जुहोती ' ( तै स ६-१-८-१ ) ति विशेषशास्त्रेणा 'हवनीये जुहोती'ति (तै ब्रा १-६-५-४) शास्त्रस्येव 'नानुयाजेष्वि' त्यनेन 'यजतिषु येयजामहं करोती'त्यस्य बाधः स्यादिति वाच्यम् । परस्परनिरपेक्षयोरेव शास्त्रयोर्बाध्यबाधकभावात् । पदशास्त्रस्य हि स्वार्थविधानार्थमाहवनीयशास्त्रानपेक्षणान्निरपेक्षत्वम् । प्रकृते तु निषेधशास्त्रस्य निषेध्यप्रसक्त्यर्थं 'यजतिषु येयजामह' मित्यस्यापेक्षणान्न निरपेक्षत्वम् ।

It should not be urged, ' Just as the text ' One should make the offerings in the AHAVANĪYA, is annulled by the special text ' He should offer oblations at the (seventh) step,' so the text ' Not in the ANUYĀJAS ' will annul the text He should utter 'YE YAJĀMAHE, in sacrificial formulas " For, the relation of the annulled and the aunulling subsists only between texts that are mutually independent For, the text regarding the step does not depend upon the taxt relating to the ĀHAVANIYA for specifying its object and is hence independent ( of the latter). But, in the instance under consideration, the text of prohibition, because it has to depend upon the text " He should utter 'YEYAJĀMAHE' for establishing the thing forbidden, is not independent

---

भक्तिविपरिणामयोर्न श्रम कर्तव्य स्यात् । केचित्तु तन्मूलशास्त्रादिति बाधमूलशास्त्राद्बाधकरूपात्प्राप्तिमूलरागस्य यथा बाधस्तथा शास्त्रान्तरेण प्राप्तिमूलशास्त्रस्य बाधायोगादिति व्याचक्षते । **ननु** यथा पदाधिकरणकहोमविधायकविशेषशास्त्रेणाहवनीयाधिकरणकहोमविधायकस्य सामान्यशास्त्रस्य बाध क्रियते, तथानुयाजेषु येयजामहमन्त्रप्रतिषेधकरूपविशेषशास्त्रेण यागसामान्ये समन्त्रविधायकस्य सामान्यशास्त्रस्य बाध कथ न क्रियत इत्याशङ्क्य परिहरति–**नचेत्यादिना** । नच वाच्यमित्यत्र हेतुमाह––**परस्परेति** । शास्त्रयोरेकविषये बाध्यबाधकभावे परस्परनिरपेक्षत्व हेतु पदशास्त्रस्य पदाधिकरणकहोमरूपस्वार्थविधानार्थमाहवनीयशास्त्रनिरपेक्षत्वादनुयाजेषु येयजामहमन्त्रप्रतिषेधकशास्त्रस्य तत्र प्रतिषेध्यमन्त्रप्रसक्त्यर्थं यजतिसामान्ये तादृशमन्त्रविधायकसामान्यशास्त्रसापेक्षत्वाच्चेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्य प्रदर्शयति––**पदशास्त्रस्येत्यादिना** । तथाच प्रतिषेधशास्त्रस्य विशेषविषयत्वेन प्रबलत्ववद्विधिशास्त्रस्याप्युपजीव्यत्वेन प्रबलत्वमस्तीति न प्रतिषेधशास्त्रेण विधिशास्त्रस्यात्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्प स्यात्सच न युक्त इत्युपरिष्टात्स्पष्टीभविष्यतीति भाव ।

( ६४ )

तस्माच्छास्त्रविहितस्य शास्त्रान्तरेण प्रतिषेधे विकल्प एव । सच न युक्तः । विकल्पे शास्त्रस्य पाक्षिकाप्रामाण्यापातात् । नह्यनुयाजेषु येयजामहमित्यस्यानुष्ठाने नानुयाजेष्वित्यस्य प्रामाण्यं संभवति, व्रीहियागानुष्ठाने यवशास्त्रस्येव । द्विरदृष्टकल्पना च स्यात्, विधिप्रतिषेधयोरपि पुरुषार्थत्वात् । अतो नात्र प्रतिषेधस्याश्रयणम्, किंतु नञोऽनुयाजसंबन्धमाश्रित्य पर्युदासस्यैव । इत्थं चानुयाजव्यतिरिक्तेषु यजतिषु ये

Therefore, it is only option that results when one text prohibits what has been enjoined by another But that is not reasonable For, in an option, the text becomes alternatively open to unauthoritativeness. Because if in the ANUYĀJAS "YE YAJĀMAHE' were used the text "Not in the ANUYĀJAS" will not possess authority like the text relating to barley, when the sacrifice is performed with rice grains Again, the Unseen will have to be assumed twice for, the Injunction and the Prohibition are both intended for the betterment of the Person (and not the Sacrifice) Hence, in the present instance, Prohibition should not be admitted but only *Exclusion* on the basis of the connection of the ANUYAJAS with the negative Thus, the sense understood from the sentence is that the

---

बाधायोगमुपसंहरति––**तस्मादिति** । मन्त्रविधायकशास्त्रस्य तत्प्रतिषेधकशास्त्रेण बाधायोगाद्विहितस्यापि तेन प्रतिषेधे विकल्प एव स्यान्न बाध इत्यर्थ । **ननु** भवतु विकल्प एव तेन किं हीयत इत्यत आह **सचेति** । विकल्पस्यायुक्तत्वे हेतुमाह––**विकल्प इति** । **ननु** विकल्पस्वीकारे कथं पक्षे शास्त्रस्याप्रामाण्यापात इत्यत आह––**नहीति** । यथा व्रीहिभिर्यागानुष्ठानसमये यवशास्त्रस्य न प्रामाण्य भवति, तथा विधायकशास्त्रानुसारेण 'ये यजामहे' इति मन्त्रस्यानुयाजेषूच्चारणानुष्ठानसमये ■ तत्प्रतिषेधकशास्त्रस्य प्रामाण्य संभवतीत्यर्थ । किंच विकल्पपक्षे हि द्विरदृष्टकल्पनाप्रसङ्गोऽपि स्यात्, विधिशास्त्राद्ध्येवमवगम्यते यदनुयाजेषु 'ये यजामहे' इति मन्त्रस्य करणे कश्चनोपकारो भवतीति प्रतिषेधशास्त्रादपि तत्र तदकरणात्कश्चनोपकारो भवति दर्शपूर्णमासयोरनृतवदनाकरणादिवन्योपकारवदित्यवगम्यते । तच्चोपकारद्वयमदृष्टरूपमिति द्विरदृष्टकल्पनाप्रसङ्ग इत्याह––**द्विरदृष्टकल्पना चेति** । तत्र हेतुमाह–**विधीति** । **पुरुषार्थत्वादिति** । विधानवत्प्रतिषेधस्याप्यदृष्टपुरुषार्थसंपादकत्वादित्यर्थ । तस्मादनुयाजेष्वित्यादौ प्रतिषेधस्वीकारे विकल्पादिदोषापत्तेर्नात्र प्रतिषेध समाश्रीयते किंतु नञो नामसंबन्ध-

यजामह इति मन्त्रं कुर्यादिति वाक्यार्थबोधः, नञोऽनुयाजव्यतिरिक्ते लाक्षणिकत्वात् । एवंच न विकल्पः । अत्र च वाक्ये ये यजामह इति न विधीयते, यजतिषु येयजामहमित्यनेनैव प्राप्तत्वात् । किंतु सामान्य-शास्त्रप्राप्त-येयजामह इत्यनुवादेन तस्यानुयाजव्यतिरिक्तविषयकत्वं विधीयते । यद्यजतिषु येयजामहं करोति तदनुयाजव्यतिरिक्तेष्विति ।

incantation "YE YAJĀMAHE" should be used in sacrifices excepting the ANUYĀJAS, Since, the negative is used to indicate (LAKSH) whatever is different from the ANUYĀJAS. Thus there is no option And in this sentence, it is not the the utterance of "YE YAJĀMAHE" that is enjoined, for, it is already established by the sentence "He should utter 'YE YAJĀMAHE' in sacrifices" But by a reiteration of the utterance of 'YE YAJĀMAHE" obtaining from the text of general application, its (i e of the utterance) application in cases other than the ANUYĀJAs is enjoined Whenever in sacrifices one utters 'YE YAJĀMAHE' it should be in sacrifices other than the ANUYĀJAS

---

मास्त्विह पर्युदासस्यैवाश्रयण क्रियत इत्युपसंहरति—अत इति । एवंच 'नानुयाजेषु येयजामहं करोती'-त्यस्य वाक्यस्यार्थमाह—इत्थं चेति । अनेन पूर्वोक्तप्रकारेण चेत्यर्थः । अत्र पर्युदासस्य तात्पर्यविषयत्वेन करोतेरवतारितस्य नञोऽनुयाजशब्देन संबन्धसिद्धो चेति यावत् । तत्र हेतुमाह —नञ इति । अनुयाजव्यतिरिक्तेऽनुयाजत्वाभावस्य सत्त्वाच्छक्यसंबन्धसंभवेन लक्षणोपपत्तिरिति भाव । अत्र प्रतिषेधपक्षं परित्यज्य पर्युदासपक्षस्वीकारस्य फलमाह—एवंचेति ननु 'नानुयाजेषु येयजामहं करोती' त्यत्र 'येयजामह' इति मन्त्रविधौ तस्यानुयाजव्यतिरिक्तविषयत्वविधौ च वाक्यभेदः स्यादित्यत आह—अत्र चेति । सामान्य-शास्त्रेति । 'यजतिषु येयजामह करोती' ति यजिमात्रान्ये तद्विधायकशास्त्रप्राप्तमेव 'येयजामह' इति मन्त्रमनूद्य 'नानुयाजेषु येयजामह करोती' त्यत्र तस्यानुयाजव्यतिरिक्तविषयता विधीयत इत्यर्थः । तथाच यजतिषु येयजामहादिसामान्यशास्त्रस्य विशेषापेक्षित्वे नानुयाजेष्वित्यादि-विशेषशास्त्रेणानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरिक्तयागेषु 'येयजामह' इति मन्त्रः कर्तव्यतया प्राप्त । अनुयाजेषु तु तस्य कर्तव्यत्वेनाप्राप्तत्वादप्रतिषिद्धत्वाच्च नात्र विकल्पप्रसङ्गोऽपि संभवति । स्पष्टमेवानुयाजव्यतिरिक्तविषयसमर्पणाच्च न नानुयाजेष्वित्यादिवाक्यस्याप्रामाण्यमपि भवति । तस्मात्पर्युदासाश्रयणे बाधकाभावात् स एव स्वीकर्तव्य इति भाव ।

नन्वेवं सामान्यशास्त्रप्राप्तस्य विशेषे संकोचनरूपादुपसंहारात्पर्युदासस्य भेदो न स्यादिति चेन्न । उपसंहारो हि तन्मात्रसंकोचार्थः । यथा 'पुरोडाशं चतुर्धा करोतीति' (ते ब्रा.३-३-८-६) सामान्यप्राप्तचतुर्धाकरणम् 'आग्नेयं चतुर्धा करोतीति' (आपस्तम्ब ३-३-२) विशेषादाग्नेयपुरोडाशमात्रे संकोच्यते। पर्युदासस्तु तदन्यमात्रसंकोचार्थ इति ततो भेदात् ।

If it be urged, "In this way, Exclusion will not differ from Restriction which consists in restricting a thing obtaining from a text of general application to a particular case", we differ. For, Restriction is intended for the restriction of a thing to that (case) only, as the division into four parts (of the sacrificial cake), obtaining from the text of general application "He should divide the sacrificial cake into four parts" is restricted only to the sacrificial cake to Agni, from the particular text "He *should divide the sacrificial cake to Agni into four parts*". Exclusion, on the other hand, is meant for restricting a thing to everything else but the particular case. Hence it is different from Restriction.

---

ननु पर्युदासाश्रयणपक्षे 'यजतिषु येयजामहं करोती'ति सामान्यशास्त्रेण यागमात्रे प्राप्तस्य 'ये यजामहे' इति मन्त्रस्य 'नानुयाजेषु येयजामहं करोती'ति विशेषशास्त्रेणानुयाजव्यतिरिक्तविषये यागविशेषे संकोचनात्पर्युदासस्योपसंहारादभेदापत्तिः स्यात् । सामान्ये प्राप्तस्य विशेषे संकोचस्यैवोपसंहारपदार्थत्वात् । यथा 'पुरोडाशं चतुर्धा करोती'ति पुरोडाशसामान्ये प्राप्तस्य चतुर्धाकरणस्य 'आग्नेयं चतुर्धा करोती'त्याग्नेये विशेषे संकोच इत्याशङ्कते—नन्वेवमिति । 'पुरोडाशं चतुर्धा करोती'त्यनेन पुरोडाशसामान्ये प्राप्तस्य चतुर्धाकरणस्य 'आग्नेयं चतुर्धा करोती'त्यनेन [illegible] पुरोडाशविशेषमात्रे संकोचः क्रियते । प्रकृते [illegible] यजतिष्वित्यादिना यजतिसामान्ये प्राप्तस्य 'ये यजामहे' इति मन्त्रस्य नानुयाजेष्वित्यादिना यजतिविशेषादनुयाजरूपादन्यमात्रे यजतिविशेषे संकोच इत्युपसंहारात्पर्युदासस्य भेदः स्पष्ट एवेति परिहरति—नेत्यादिना । तन्मात्रसंकोचार्थ इति । सामान्यप्राप्तस्य विशेषमात्रसंकोचार्थ इत्यर्थः । तत्रोदाहरणमाह—यथेति । तदन्यमात्रसंकोचार्थ इति । सामान्यप्राप्तस्य विशेषादन्यमात्रसंकोचार्थ इत्यर्थः । इति ततो भेदादिति । एवमुक्तप्रकारेणोपसंहारात्पर्युदासस्य भेदान्न तयोरभेदापत्तिरित्यर्थः । अपरे तूपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे संकोचनरूपो विधेर्व्यापारविशेषः, 'पर्युदासस्तु पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञि'त्यभियुक्तोक्त्या प्रत्य-

कुत्रचिद्विकल्पप्रसक्तावप्यनन्यगत्या प्रतिषेधाश्रयणम्। यथा 'नातिरात्रे षोडशिनं गृह्णाती'त्यादौ (तै. सं. ६-६-११-४?)। अत्र हि 'अतिरात्रे षोडशिनं गृह्णाति' (*ibid.*) ति शास्त्रप्राप्तषोडशिग्रहणस्य निषेधाद्विकल्पप्रसक्तावपि न पर्युदासाश्रयणम्, असंभवात्। तथाहि यद्यत्र षोडशिपदार्थेन नञर्थान्वयस्तदातिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थबोधः स्यात् स च न संभवति, अतिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधि-

In certain cases, though there is the contingency of option prohibition has to be admitted, for want of an alternative. Sentences like "He should not take the SHODAS'HIN at the ATIRĀTRA" are instances in point. For, here, though there arises the contingency of an option owing to the prohibition of the taking of the SHODAS'HIN obtaining from the text "He should take the SHODAS'HIN in the ATIRĀTRA", still Exclusion is not admitted owing to its improbability To explain: If in this sentence the sense of the negative be construed with the sense of the word SHODAS'HIN, then the sense of the sentence will be that in the ATIRĀTRA one should take a thing other than the SHODAS'HIN, which is improbable for it conflicts with the direct injunction "He should take the SHODAS'HIN in the ATIRĀTRA", If it (*i. e.* the negative) were construed withthe sense of the word ATIRĀTRA, then the

---

यातिरिक्तेन नाम्ना धातुना च नञ संबन्धस्य। तस्मादनयोस्तावत्स्वरूपतः स्पष्ट एव भेद इति न तयोरभेदापत्तिरित्याहुः। किंच यत्र तु पर्युदास आश्रयितुं न शक्यते तत्र विकल्पप्रसक्तावपि निषेध एवाश्रीयत इत्याह—**कुत्रचिदिति**। **अनन्यगत्येति**। प्रतिषेधादन्यगतिविशेषस्य पर्युदासस्यासंभवेनेत्यर्थः। तत्रोदाहरणमाह—**यथेति**। नातिरात्र इत्यादिवाक्ये प्रतिषेध एवाश्रीयते ननु पर्युदासः। अत्र चातिरात्र इत्यादिशास्त्रेण प्राप्तस्य षोडशिनामकपात्रविशेषग्रहणस्य प्रतिषेधाद्विकल्पप्रसङ्गेऽपि पर्युदासाश्रयणासंभवादित्याह—**अत्र हीत्यादिना**। अत्र पर्युदासाश्रयणासंभवमुपपादयति—**तथाहीत्यादिना**। **अत्रेति**। नातिरात्रे षोडशिनं गृह्णातीत्यत्रेत्यर्थः। **षोडशिपदार्थेन नञर्थान्वय इति**। अतिरात्रे न षोडशिनं गृह्णातीत्यन्वय इत्यर्थः। एतदन्वयपक्षे वाक्यार्थमाह—**तदेति**। एतादृशवाक्यार्थासंभवे हेतुमाह—**अतिरात्रे षोडशिनमिति**। अत्र पर्युदासोपपत्तयेऽन्व-

विरोधात् । यदि चातिरात्रेण पदार्थेनान्वयस्तदातिरात्रव्यतिरिक्ते षोडशिनं गृह्णातीति वाक्यार्थबोधः स्यात्सोऽपि न संभवति तद्विधिविरोधात् । अतोऽत्रानन्यगत्या शास्त्रप्राप्तषोडशिग्रहणस्यैव निषेधः । नच विकल्पप्रसक्तिस्तस्याप्यपेक्षणीयत्वात् ।

इयांस्तु विशेषो यद्विकल्पादेकप्रतिषेधेऽपि प्रतिषिध्यमानस्य नानर्थहेतुत्वम्, विधिनिषेधोभयस्यापि क्रत्वर्थत्वात् । यत्र तु न विकल्पः,

sense of the sentence as apprehended will be "He should take the SHODAS'HIN in rites other than the ATIRATRA", which is improbable because it conflicts with the injunction for it Hence for want of any other alternative, (here) is (assumed) Prohibition against taking the SHODAS'HIN whthatich obtains from the text It should not be urged that there results the contingency of an option, for it was just to be expected, any way

This much however, is the distinction that though by option a thing is prohibited, still the thing prohibited is not a source of evil, for (there) both the injunction and prohibition are meant for the betterment of the sacrifice In *those cases*, on the other hand, where *there is* is no option, where the obtainment is voluntary, and where the prohibition is for the betterment of the person, the thing prohibited

---

यान्तरमाह—**यदीति** । **अन्वय इति** । ननर्थस्येति शेष । निरुक्तान्वयानुरोधेन वाक्यार्थबोधासंभवेऽपि हेतुमाह—**तद्विधिविरोधादिति** । अतिरात्रे षोडशिनं गृह्णातीत्यतिरात्रयोगे षोडशिग्रहणविधायकप्रत्यक्षविधिविरोधादित्यर्थः । उपपादितमुपसंहरति—**अत इति** । उक्तदोषप्रसङ्गादस्मिन्वाक्ये प्रतिषेधादन्यासंभवेन प्रतिषेध एव स्वीक्रियत इत्यर्थः । अत्र प्रतिषेधे सिद्धान्तिते विकल्पप्रसङ्गमाशङ्क्येष्टापत्त्या परिहरति—**नचेदित्यादिना** । अत्रेदं बोध्यम्—यत्र तस्य अनभिप्रायाद्युपक्रमो नास्ति विकल्पाप्रसक्तिश्च तत्र प्रतिषेधो भवति यथा न कलञ्जं भक्षयेदिति । यत्र तु विकल्पप्रसङ्गेऽपि पर्युदासो नाश्रयितुं शक्यते तत्र प्रतिषेध एव स्वीक्रियते यथा नातिरात्रे षोडशिनं गृह्णातीति ।

**ननु** नातिरात्रे षोडशिनं गृह्णातीत्यत्र विकल्पप्रसङ्गेऽपि यदि षोडशिग्रहणस्य प्रतिषेध एव स्वीक्रियते तदा प्रतिषिध्यमानस्यानर्थहेतुत्वस्वीकारात्षोडशिग्रहणस्यापि कलञ्जभक्षणादिवत्प्रतिषिध्यमानत्वेनानर्थहेतुत्वादनर्थत्वबाधापत्तिरित्याशङ्क्याह—**इयांस्त्वित्यादिना** । प्रतिषिध्यमानयोरनर्थहेतुत्वतदभावरूपो विशेष इत्यर्थः । **विकल्पादिति** । यत्र प्रतिषेधस्य विकल्पापाद-

प्राप्तिश्च रागत एव, प्रतिषेधश्च पुरुषार्थः, तत्र प्रतिषिध्यमानस्यानर्थहेतुत्वम्, यथा 'न कलञ्जं भक्षये' दित्यादौ कलञ्जभक्षणादेः, तत्र भक्षणनिषेधस्यैव पुरुषार्थत्वात् । नच 'दीक्षितो न ददाति न जुहोती' (मै. सं ३-६-५) त्यादौ शास्त्रप्राप्तदानहोमादीनां निषेधाद्विकल्पापत्तिरिति

is a source of evil, as in the case of eating poisoned meat (prohibited) in 'One should not eat poisoned meat', for, there only the prohibition of eating is conducive to the betterment of the person It should not be urged that there arises the contingency of Option from prohibition by "The consecrated should not give (gifts) nor make offerings etc" of gifts, sacrifice etc that are established by the text For when the prohibition of gifts, sacrifices etc which themselves are (generally) conducive to the betterment of the

---

क्रत्वर्थं तत्रैकस्य प्रतिषेधेऽपि न प्रतिषिध्यमानस्यानर्थहेतुत्वमित्यर्थ । तत्र हेतुमाह–विधीति । रागत एवेत्येवकारेण षोडशिग्रहणादवच्छाक्षेण प्राप्ति प्रतिषिध्यते । अत्र निषिध्यमानस्यानर्थहेतुत्वे हेतुमाह—तत्रेति । षोडशिग्रहणविधितत्प्रतिषेधयोरुभयोरपि क्रत्वर्थत्वात्तत्र प्रतिषिध्यमानस्य नानर्थहेतुत्वम्, अत्र तु कलञ्जभक्षणादिप्रतिषेधस्यैव पुरुषार्थत्व नतु तदनुष्ठानस्येति प्रतिषिध्यमानस्य कलञ्जभक्षणब्राह्मणहननादेरनर्थहेतुत्वमेवेति भाव । ननु यथा शास्त्रप्राप्तस्य षोडशिग्रहणस्य प्रतिषेधे विकल्प स्वीकृत, तथा शास्त्रप्राप्तदानादीनामपि प्रतिषेधे विकल्पापत्ति स्यादिति स्था ताभिप्रायेणातिप्रसङ्गमाशङ्क्य परिहरति— नचेत्यादिना । स्वत इति । स्वत पुरुषार्थभूतदानहोमादीनां पुरुषार्थत्वेनैव शास्त्रप्राप्ति, क्रत्वर्थत्वेनैव च प्रतिषेध इति षोडशिग्रहणविधितत्प्रतिषेधयोरुभयोस्तुल्यार्थत्वाभावेन न विकल्पापत्ति । किंच रागत प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे प्रतिषिध्यमानस्य कलञ्जभक्षणादिवदनर्थहेतुत्वसं कारात्र दानहोमादे प्रतिषिध्यमानस्याप्यनर्थहेतुत्वं संभवति तस्य रागत प्राप्तत्वाभावात्, कलञ्जभक्षणादिप्रतिषेधवत्तत्प्रतिषेधस्य पुरुषार्थत्वाभावाच्चेति भाव ॥ अत्रेद बोध्यम् ज्योतिष्टोमे श्रूयते 'दीक्षितो न ददाति न जुहोति न पचती'ति । तत्र यद्दानादिक पुरुषार्थं यच्च क्रत्वर्थं तत्राप्युपदिष्टमतिदिष्टं च तत्सर्वं प्रतिषिध्यते । कुत । न ददातीत्यादिवचनस्य सामान्यभिन्नविषयत्वात् । क्रत्वर्थो निषेध क्रतुकाले तदनुष्ठानं वारयति । पुरुषार्थस्तु विधि कालान्तरे तदनुष्ठापयति तस्मात्पुमर्थस्य निषेध इति । यदि प्रतिषेधपक्षे वाक्यभेद शङ्क्येत, तर्हि पुमर्थ दानादिव्यतिरिक्त क्रतुकालेऽनुष्ठेयमिति पर्युदासोऽस्तु । ननु यत्र रागत प्राप्तस्य प्रतिषेध स्यत्पादित्यत्र पक्ष १. अग्निहोत्रदानादेरुपदिष्टस्यापि प्रतिषेधे सत्युपदेशो व्यर्थ स्यादिति ततोऽप्रतिदिष्ट पुमर्थं चेत्येतदुभयमेव प्रतिषिध्यते क्रत्वर्थत्वेनोपदिष्टं दानादिकमनुष्ठेयमिति

वाच्यम् । स्वतःपुरुषार्थभूतदानहोमादीनां निषेधस्य पुरुषार्थत्वाभावेन निषिध्यमानस्यानर्थहेतुत्वम्, यथा क्रतौ स्वस्त्रीगमनादेः, तन्निषेधस्य क्रत्वर्थत्वेन तस्य क्रतुवैगुण्यसंपादकत्वात् ।

( ६५ )

प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः। तस्य च लक्षणया प्रयोज-

person, is not so conducive ( in the particular case ) to the betterment of the person the thing prohibited is not a source of evil as to approach one's wife in the course of a sacrifice ( is not a source of evil ) for, there, as the prohibition is meant for the betterment of the sacrifice, the thing prohibited brings about a deficiency of the sacrifice

( 65 )

A Missionary Assertion is a sentence devoted either to approbation or reprobation . With the help of Indication

---

मध्यम पक्ष । नित्याग्निहोत्रदानादिकं पुरुषार्थत्वेन यत्प्रत्यक्षश्रुत्युपदिष्टं ज्योतिष्टोमकालेऽपि प्राप्तं यच्चातिदिष्टं दानादिकं तयोरुभयोर्मध्ये प्रत्यक्षोपदिष्टनिषेधस्योपदिष्टमेव संनिहित, मिति पुमर्थस्यैवात्र निषेध । नच नित्याग्निहोत्रदानादौ विधिनिषेधयो प्रवृत्त्या विकल्प शङ्क्य पुरुषार्था भवति तत्र प्रतिषिध्यमानस्यानर्थहेतुत्व यथा कलञ्जभक्षणादे, क्रतौ स्वस्त्रीगमनप्र तिषेधस्य तु पुरुषार्थत्वाभावात्तत्र निषिध्यमानस्य स्वस्त्रीगमनस्य कथमनर्थहेतुत्वमित्यत आह- **निषेधस्येति** । यद्वा निषेधस्येत्यादिपूर्वमेवान्वेति तत्र प्रसिध्यर्थं ■ यथा क्रतावित्यादिकमेव भवति । तथाच स्वत पुरुषार्थेत्यादेरयमर्थ —स्वत इति क्रत्वङ्गत्वोपाधिमन्तरेण केवलस्वरूपत एव पुमर्थभूतानां दानादीना निषेधस्य पुरुषार्थत्वाभावेऽपि क्रत्वर्थत्वसम्भवान्निषिध्यमानस्य दानादे क्रतुवैगुण्यसंपादकत्वेनानर्थहेतुत्वमिति योजना । तथाच तेषामनुष्ठानस्य स्वत पुरुषार्थत्वेऽपि क्रत्वनुष्ठानकालेऽपुरुषार्थत्वात्तत्र तेषामनुष्ठानस्य भवत्यनर्थहेतुत्वमिति भाव । **तस्येति** । क्रतौ स्वस्त्रीगमनादेरित्यर्थ । **क्रतौ स्वस्त्रीगमनादे कलञ्जभक्षणादिवदनर्थरूपनरकादिदुःखाहेतुत्वेऽपि क्रतुवैगुण्यसंपादकत्वेनानर्थहेतुत्व सम्भवाद्भवत्यत्रापि निषिध्यमानस्यानर्थहेतुत्वमिति भाव** । तस्मान्निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिजनकत्वेनैव पुरुषार्थानुबन्धित्वमिति सिद्धम् ॥

इदानीं मन्त्रार्थवादसाधारण्येनार्थवादरूपवेदभागस्य लक्षणमाह—**प्राशस्त्येति** । **ननु** वायुर्वै क्षेपिष्ठा देवते' त्यादेरर्थवादवाक्यात् प्राशस्त्यादेरप्रतीयमानत्वान्न तस्य प्राशस्त्यादिपरत्व तन्मात्रमर्थविलक्षणमिदमित्यत आह—**तस्येति**। तस्यार्थवादस्य लक्षणया प्राशस्त्यनिन्दान्यतर

Results

नवदर्थपर्यवसानम् । तथाहि–अर्थवादवाक्यं हि स्वार्थप्रतिपादने प्रयोजनाभावाद्विधेयनिषेध्ययोः प्राशस्त्यनिन्दितत्वे लक्षणया प्रतिपादयति । स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात् । आम्नायस्य हि क्रियार्थत्वात् । न चेष्टापत्तिः । 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिना सकलवेदाध्ययनं कर्तव्यमिति बोधयता सर्ववेदस्य प्रयोजनवदर्थपर्यवसायित्वं सूचयतोपात्तत्वेनानर्थक्यानुपपत्तेः ।

स द्विविधः । विधिशेषो निषेधशेषश्चेति । तत्र 'वायव्यं श्वेतमालभेत

does it result in giving a sense with purpose? To explain Verily, the sentence of Missionary Assertion because no purpose would be served if it were to convey its own (*i e* primary) sense, conveys by Indication, the approved or reproved nature of the thing enjoined or prohibited If it were to convey barely its own sense, there will arise the contingency of its futility For, the Veda is meant for sacrificial actions It should not be argued that it is after all an inevitable (ISHTA) contingency For, it is improper to assume that the Missionary Assertions are useless in view of the fact that the injunction "One should study the SVĀDHYĀYA", which teaches that the *whole* Veda should be studied, has been assumed (UPĀTTATVENA) to suggest that the Veda in its entirety results in giving a sense *with purpose*

It is of two kinds (1) that subservient to Injunction and (2) that subservient to Prohibition Thus,

---

प्रतिपादकत्वसंभवेन नेदं लक्षणसंभवी यथे । अर्थवादस्य फलवदर्थपर्यवसानमेवोपपादयति–– **तथाहीत्यादिना** । अर्थवादवाक्यं कर्तृ प्राशस्त्यनिन्दितत्वे द्व प्रतिपादयतीत्यन्वय । नन्वर्थवादस्य स्वार्थमात्रपरत्वे कथमानर्थक्यप्रसङ्गो 'वायुर्वै क्षेपिष्ठे' त्यादेरर्थवादवाक्यादिक्षप्रगामिवायुदेवतारूपार्थस्य प्रतीयमानत्वादित्यत आह––**आम्नायस्येति** । समस्तवेदस्य क्रियाप्रतिपादकत्वस्वीकारेण नास्य सिद्धार्थप्रतिपादकस्य स्वार्थमात्रपरत्वे सार्थक्यमुपपद्यत इति भाव । अर्थवादवाक्यानामनर्थकत्वस्येष्टत्वमाशङ्क्य परिहरति––**नचेत्यादिना** ।

अर्थवाद विभजते––**स द्विविध इति** । **विधिशेष इत्यादि** । सोऽपि चतुर्विध, प्रशंसा–निन्दा–परकृति–पुराकल्प–भेदात् । तत्र प्रशंसार्थवादो हि 'शोभनेऽस्य मुखं य एव

भूतिकाम ' (तै. स २-१-१-१) इत्यादिविधिशेषस्य 'वायुर्वै क्षेपिष्ठा देवते ' (*ibid*) त्यादेर्विधेयार्थप्राशस्त्यबोधकतयार्थवत्त्वम् । 'बर्हिषि रजतं न देय ' (तै स. १-५-१-२) मित्यादिनिषेधशेषस्य, 'सोऽरोदीत्तद्रुद्रस्य रुद्रत्वमित्यादे ' (तै स १-५-१-१) र्निषेध्यस्यानिन्दितत्वबोधकतयार्थवत्त्वम् । नच प्राशस्त्यादिबोधस्य निष्प्रयोजनत्वेन नार्थ-

the sentence "Vāyu is verily the swiftest deity etc" which is subservient to the injunction "One desirous of prosperity should immolate a white animal in honour of Vāyu" is purposeful in that it intimates the approved nature of the matter enjoined The passage "He howled He is called RUDRA (the Howler) because he howled," which is subservient to the prohibition "One should not offer silver on the sacred grass" is purposeful in that it intimates the reproved nature of the thing prohibited It should not be argued, "Missionary Assertion is without a purpose because the intimation of approved nature etc can

---

वेद, इत्यादि 'वायुर्वै क्षेपिष्ठे' त्यादिर्मूलोदाहृतश्च । निन्दार्थवादस्तु 'असन्नं वा एतद्यदच्छन्दोमम्' अश्रुज हि रजत यो बर्हिषि ददाती त्यादि सोऽरोदीदित्यादिर्मूलोदाहृतश्च भवति। परेणेद महता पुरुषेण कर्म कृतमिति प्रतिपादकोऽर्थवाद परकृतिरित्युच्यते यथा अग्निर्वा 'अकामयते' त्यादि । पराकृतृकार्यादिप्रतिपादकोऽर्थवाद पुराकल्प इत्युच्यते । यथा तमशपद्धिया धियात्वावध्यासु ' रित्यादिरिति । **विधेयार्थप्राशस्त्येति** । वायु क्षिप्रगामित्वादतीव प्रशस्ता देवता भवत्यतस्तद्देवत्यं कर्म प्रशस्तमिति विधेयकर्मदेवतागतप्राशस्त्यप्रतिपादनद्वारा विध्येकवाक्यत्वेनार्थवत्त्वमित्यर्थ । **निषेध्येति** । निषेध्यरजतनिन्दाप्रतिपादनद्वारा रजतनिषेधप्राशस्त्यपरत्वेन निषेधैकवाक्यत्वादर्थवत्त्वमित्यर्थ । एवम् 'अग्निर्वा अकामयते' त्यादेराग्नेयमिदेवत्या याग पूर्वकालेऽग्निना कृतत्वात्प्रशस्तोऽत आधिक्यादिदानींतनैरप्यन्यैर्यजमानैरवश्य कर्तव्यमिति विधेयकर्मगतप्राशस्त्यप्रतिपादनद्वारा विध्येकवाक्यत्वेनार्थवत्त्व बोध्यम् । एवमन्यत्रापि तत्तद्विधेयकर्मप्राशस्त्यादिप्रतिपादनद्वारेण तत्तद्विध्याद्येकवाक्यत्वेनार्थवत्त्व विभावनीयम् । क्वचिदर्थवादस्य सन्दिग्धार्थनिर्णायकत्वेन प्रामाण्य स्वीकृतम् । यथा 'अक्ता शर्करा उपदध्या' दितिविधावक्ता इति पदेन द्रवद्रव्यसामान्य प्रतीयते । तच्च द्रव्य किमिति संदेहे 'तेजो वै घृत 'मित्यर्थवादस्माद्वाक्यशेषात् घृतमिति निश्चीयत इति । ननु विधेयकर्मप्राशस्त्यादिबोधस्य सुखदु खाभावान्यतरविलक्षणत्वेन नार्थवादस्य तत्प्रतिपादनेनार्थवत्त्वमुपपद्यत

वादस्यार्थवत्त्वमिति वाच्यम् । आलस्यादिवशादप्रवर्तमानस्य पुंसः प्रवृत्त्यादिजनकत्वेन तद्बोधस्यापि योगात् ।

( ६६ )

स पुनस्त्रेधा । तदुक्तम्—'विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः' ( न्यायसिद्धान्तमञ्जरी ४ ) इति । अस्यार्थः—प्रमाणान्तरविरोधे सत्यर्थवादो गुणवादः, 'यथा आदित्यो यूप' इत्यादिः । यूप आदित्याभेदस्य प्रत्यक्षबाधितत्वादादित्यवदुज्ज्वलत्वरूपगुणोऽनेन लक्षणया प्रतिपाद्यते । प्रमाणान्तरावगतार्थबोधको-

be of no use " For, such an intimation is useful in so far as it creates an inclination in the person who ( otherwise ) may be disinclined ( to do the particular act ) through reasons like idleness

( 66 )

That ( Missionary Assertion ) again is of three kinds So it is said ' It will be a Figurative Assertion when there is a conflict, a Reiteration when there is a confirmation ( by other means of proof, of the thing stated ), an Assertion of the Past, when they ( i e. conflict and confirmation ) are wanting Thus, they hold the Missionary Assertion to be of three kinds ' The passage is to be explained in this way Figurative Assertion is a Missionary Assertion involving conflict with the other means of proof, as for instance, passages like " The sacrificial post is the sun " Since the identity of the post with the sun is sublated by *Direct Perception*, this ( *passage* ) *conveys*, *by Indication* the attribute of brilliance similar to that of the sun

---

इत्याशङ्क्य परिहरति—नचेत्यादिना । तद्बोधस्योपयोगादिति । अर्थवादजन्यप्राश स्त्यादिबोधस्य विहितकर्मानुष्ठानाद्युपयोगादर्थवादस्यार्थवत्त्वमुपपद्यत इत्यर्थः ।

स पुनरर्थवादो गुणवादोऽनुवादो भूतार्थवादश्चेति त्रिधा भवतीति पुनरपि त त्रेधा विभजते—स पुनस्त्रेधेति । तस्य त्रित्वे प्राचां संमतिमुदाहरति—तदुक्तमिति । तद्धानादिति । तयोर्हाने तद्धानं तस्मादिति विग्रहः । प्रमाणान्तरविरोधप्रमाणान्तरावधारणयोर्हानादित्यर्थः ।

ऽर्थवादोऽनुवादः, यथा 'अग्निर्हिमस्य भेषज'मिति, [1] अत्र हिमविरोधित्वस्याग्नौ प्रत्यक्षावगतत्वात् । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधकोऽर्थवादो भूतार्थवादः, यथा 'इन्द्रो वृत्राय वज्रमुदयच्छ'[1]दित्यादिः ।

( ६७ )

एवंच 'यजेत स्वर्गकाम' इत्यादिनिखिलवेदस्य साक्षात्परम्परया वा यागादिधर्मप्रतिपादकत्वं सिद्धम् । सोऽयं धर्मो यदुद्दिश्य विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः । ईश्वरार्पणबुद्ध्या क्रियमाणस्तु निःश्रे-

Reiteration is a Missionary Assertion that intimates a thing apprehended by other means of proof, as for instance, " Fire is a remedy against cold ' Since, the opposition to cold as abiding in fire is apprehended by Direct Perception An Assertion of the Past is a Missionary Assertion that teaches a thing which neither conflicts with nor is established by any other means of proof, as for instance, " Indra raised his thunderbolt against Vrtra " and others

( 67 )

Thus is proved that the whole Veda comprising sentences like ' One aspiring to heaven should offer a sacrifice " teaches, directly or indirectly, Piety like sacrifice etc This Piety, when practised results into that with a view to which it is enjoined But it results into the Supreme Bliss when practised with the intention of renouncing it in favour of God Nor is an authority wanting for thus per-

---

समुदाहृतस्तद्समर्नि व्याचष्टे—अस्यार्थ इत्यादिना । इन्द्रो वृत्रायेति । अस्य वृत्रप्रतीन्द्रवज्रोद्यमनाभावावगाहिप्रमाणान्तरस्यादर्शनान्न तद्बोधने प्रमाणान्तरेण विरोधः, नापि प्रमाणान्तरावगतार्थप्रतिपादकत्वं वृत्रं प्रतीन्द्रवज्रोद्यमनप्रतिपादकप्रमाणान्तरस्यादर्शनादिति भावः ।

एवमुपपादितविध्यर्थवादादिरूपस्य पञ्चविधवेदस्य साक्षात्परम्परया यागादिधर्मप्रतिपादकत्वेनार्थवत्त्वमुपसंहरति—एवंचेति । उक्तेन प्रकारेण चेत्यर्थः । योऽयं यागादिरूपो धर्मो यत्स्वर्गादिफलमुद्दिश्य विहितः सोऽयं तादृशफलोद्देशेनानुष्ठीयमान एव तस्य फलस्य हेतुर्भवति, परमेश्वरसमर्पणमनीषयानुष्ठीयमानस्तु चित्तशुद्धितत्त्वज्ञानप्राप्तिद्वारा परम्परया मोक्षहेतुरिति धर्मानुष्ठानस्य विविदिषाश्रुतिप्रामाण्यात्संयोगपृथक्त्वन्यायमाश्रित्य परमपुरुषार्थपर्यवसायित्वमुपक्षिपति—सोऽयमित्यादि । धर्मस्य परमेश्वरसमर्पणबुद्ध्यानुष्ठाने प्रमाणाभावमाशङ्क्य तत्र

यसहेतु । नच तदर्पणबुद्ध्यानुष्ठाने प्रमाणाभावः 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पण'मिति (९-२७) भगवद्गीतास्मृतेरेव प्रमाणत्वात् । स्मृतिचरणे तत्प्रामाण्यस्य श्रुतिमूलकत्वेन व्यवस्थापनादिति शिवम् ॥

बालानां सुखबोधाय भास्करेण सुमेधसा ।
रचितोऽयं समासेन जैमिनीयार्थसंग्रहः ॥ १ ॥

**forming it with the intention of renouncing it in His favour. For, the BHAGAVADGITA, a Smrti (which says) "Whatever thou performest, whatever thou eatest, whatever oblation thou offerest, whatever thou givest, O Son of Kunti, whatever penance thou practisest, renounce it in my favour' is itself an authority. For, in the chapter (CHARANA) relating to the Smrti, has been decided its *i e of the Smrti) authoritativeness due to its being founded* on the Shruti Amen**

**This Compendium of the Topics of Jaimini has been compiled in brief by the very intelligent Bhaaskara, for the easy understanding of the young students.**

---

भगवद्वाक्य प्रमाणयति--**नचेत्यादिना** । नच तस्या स्मृतेरप्रामाण्यमाशङ्क्यं, तन्त्रे स्मृतिपादे स्थितम् 'अष्टका कर्तव्या' इत्यादिस्मृतिवाक्य न धर्मे प्रमाण, पौरुषेयवाक्यत्वे मूलप्रमाणरहितत्वाद्विप्रलम्भकवाक्यवत् । अथ मूलप्रमाणवत्त्वाय वेदार्थ एव स्मृतिभिरुच्यत इति मन्येथा तर्हि वेदेनैव तदर्थस्यावगतत्वादिय स्मृतिरनर्थिका स्यात् तदानीमनुवादकत्वाद प्रामाण्यमिति प्राप्ते ब्रूम --विमता स्मृतिर्वेदमूला वैदिकमन्वादिप्रणीतस्मृतित्वात् उपनयनाध्ययनादिस्मृतिवत् । नच वैयर्थ्यं शङ्कनीयम् । अस्मदादीना प्रत्यक्षेषु परोक्षेषु नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्यैकत्र सङ्क्षिप्यमाणत्वात् । तस्मादिय स्मृतिर्धर्मे प्रमाणमिति ।

**ननु** किमनेन सग्रहनिरूपणेन विस्तृतभाष्यादिग्रन्थैरेव जैमिनीयन्यायार्थबोधसंभवादित्याशङ्क्य सग्रहनिरूपणे स्वप्रवृत्तिनिमित्त प्रदर्शयति—**बालानामिति** । तेषां विस्तृतत्वेन तु सग्राह्यत्वात् तेर्वाल्यादितपूर्वमीमांसाशास्त्राध्ययानां जैमिनीयन्यायार्थबोध सभवति । अनेन तु तस्[illegible]

इति श्रीमहामहोपाध्यायलौगाक्षिभास्करविरचितपूर्वमीमांसार्थसंग्रहनामकं प्रकरणं समाप्तिमगात् ॥

Thus ends the manual called the PŪRVAMĪMĀNSĀ-ARTHASAMGRAHA compiled by Mahamahopadhyaya Laugakshi Bhaskara

---

टीकाविहीने तु कृता हि टीका पूर्वे तु तन्त्रे खलु सङ्ग्रहेऽस्मिन् ।
दुर्बोधशास्त्रे शिशुमादृशानां दृष्ट्वापि दोषं न सहन्ति धीराः ॥ १ ॥
यदाशया बन्धविमोक्षणं विना स्वकर्ममेवा फलहेतुतां गता ।
प्रणौमि सोमं मृडमादिकारणं किमन्यदेवैर्नफल्गुहेतुभिः ॥ २ ॥
मदीययत्नः शिवपादसेवया गुरोः कटाक्षैकलवेन लब्धया ।
प्रयुज्यमानः शिवपादपङ्कजे ह्यनय तु भूयान्मृडतोषकारणम् ॥ ३ ॥
सुजनपदविनीतो दुर्जनाद्दूरनिष्ठो गुरुहरिशिवभक्तस्तेन लब्धागमेक्षः ।
श्रुतिमणिगिरिनिष्ठो भिक्षुरामेश्वराख्यः सुजननयनिवेशाय प्रबन्धं चकार ॥ ४ ॥
गुणगणमणिसिन्धुः शम्भुपादैकभक्तो निगमशिरसि निष्ठो जातवैराग्यचित्तः ।
श्रुतिनलिनविकासे भानुभावो य ईशस्तमिह महिमपूज्यं नौमि गोपं यतीन्द्रम् ॥ ५ ॥
तस्मादेव गुरुवराद्भीष्टलब्धं गोपालाश्रमपदगीयमानदेवं तं ।
येनोमाधवचरणाब्जसेविनात्र तं वन्दे महिमगुरुं विशालबुद्धिम् ॥ ६ ॥
या काशी निखिलगुरोर्महेश्वरस्य प्राणान्ते सकलशिवप्रदा प्रसिद्धा ।
यत्राह सकलगुरोशलब्धतत्त्वस्तत्रैष सुजनहितप्रदा निबद्धा ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोपालेन्द्रसरस्वतीश्रीपूज्यपादशिष्यश्रीसदाशिवेन्द्रसरस्वतीशिष्येण श्रीरामेश्वरेण शिवयोगिभिक्षुणा विरचिता मीमांसार्थसङ्ग्रहकौमुदी चरमवर्णकं समगात् ।



# अर्थसंग्रह

## NOTES.



P. ¹1 अर्थसंग्रहः The compendium tha tdeals with the topics ( अर्थs ) treated in the सूत्रs of जैमिनि in 12 अध्यायs.¹ It may be pointed out that the अर्थसंग्रहकार concentrates his attention only on the *important* questions discussed by जैमिनि. For a summary of जैमिनि's topics read माधव's सर्वदर्शनसंग्रहः— धर्मो द्वादशलक्षण्यां व्युत्पाद्यस्तत्र लक्षणैः । प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः । अधिकारोऽतिदेशश्च सामान्येन विशेषतः । ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात् ।

Read रामेश्वरभिक्षु for an explanation of the topics in जैमिनिः— प्रथमे ( अध्याये ) विध्यादेः प्रामाण्यं निरूपितम् । द्वितीये तद्विधेयकर्मभेदो निरूपितः । तृतीये विहितानां शेषशेषिभाव । चतुर्थे क्रतुप्रयुक्तानुष्ठेयानां च पदार्थानां परिमाणं चिन्तितम् । पञ्चमेऽनुष्ठेयपदार्थानामनुष्ठानक्रमो निरूपितः । षष्ठे विहितकर्मफलभोक्तृत्वरूपाधिकारनिरूपणम् । सप्तमे प्रकृतावुपदिष्टाङ्गानां विकृतौ सामान्यातिदेशो निरूपितः । अष्टमे प्रकृत्यङ्गानां विकृतौ विशेषातिदेशः । नवमे प्रकृतावुपदिष्टानां कर्मणां विकृतावतिदेशप्राप्तानां प्रकृतिविकृत्योर्देवतादिभेदे प्रकृतिगतं देवतादिवाचकं पदं विहाय विकृतौ देवतादिवाचकस्य पदस्याध्याहार ऊहो निरूपितः । दशमे विकृतौ चोदकप्राप्तानां प्राकृताङ्गानां प्रकृतौ सावकाशानां विकृतौ श्रुपदिष्टविशेषाङ्गादिना बाधो निरूपितः । एकादशे चानेकाङ्गिविधिप्रयुक्ताङ्गानामङ्गानां सकृदनुष्ठानात्सर्वाङ्गिनामुपकारसाम्यं तन्त्रं निरूपितम् । द्वादशे चैकाङ्गिप्रयुक्तस्याङ्गानुष्ठानस्य तत्प्रयोजकसामर्थ्यरहितेऽङ्गयन्तरेऽप्युपकारः प्रसङ्गो निरूपित. ।

¹The treatise is a summary of the contents of the मीमांसान्यायप्रकाश ( आपदेवी ) by आपदेव (*circa* end of the 17th cent.)

वासुदेवं रमाकान्तं: again saluted by our author in the तर्ककौमुदी a work on Logic. Some see in the words वासुदेव and रमा a sly reference to लौ.'s parents. But this view is uncorroborated.

The propriety in invoking वासुदेव in the benedictory stanza consists probably in the close connection of विष्णु —who is the same as वासुदेव—with Sacrifice, so often described in the Brāhmana literature Cf. अग्निर्वै देवानामवमो विष्णुः परमः ।

नय (नीयते प्राप्यते विवक्षित र्थसिद्धिरनेनेति न्याय ) maxim, principle, dictum नय or न्याय denotes, so far as the पू मी is concerned, the several principles that were evolved in order to ride over the apparent inconsistencies that were found in certain Brahmana or Sutra texts or to elucidate certain obscurities present in them The inconsistencies and obscurities had a *bearing upon the performance of sacrifice* (Cf The definition वेदार्थनिर्णयसाधन आचरणात्मक पदार्थ न्याय ) that forms the central theme of the Brahmanas and the S'rauta Sutras As these नय्स were based upon reasoning the term later on came to be applied to all reasoning, whether it had to do with Sacrifice or not जैमिनिनये प्रवेशाय 'It should be noted that लौ 's अर्थसग्रह has been quite a popular work on the पूर्वमीमांसा and gives a clear outline of the subject '

## (1)

P 2 अथ marks the beginning of the treatise. The word is supposed to be auspicious Cf ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मण पुरा । कण्ठ भित्त्वा विनिर्यातौ तस्मा माङ्गलिकावुभौ cited in the भामती परमकारुणिक-अज्ञान, of whatever subject it may be, plunges the अज्ञ into troubles spiritual and material It is to rid अज्ञs of their ignorance fraught with troubles that high-souled persons like जैमिनि write works which, hence, are an outcome of their sympathy for the sufferers जैमिनि s sympathy is for those who are ignorant of धर्म Cf सिद्धान्तबिन्दु इह खलु साक्षा परम्परया वा सर्वानेव प्राणिन् समुद्दिधीर्षुर्भगवान् श्रीश कराचार्योऽना मन्या विवकेन आत्मान etc

धर्मविवेक To discriminate धर्म from अधर्म It should be seen that the term धर्म as used in the पू मी is of a more limited application than in the धर्मसूत्रs In the पूर्वमीमांसा it is defined as 'यागादरव धर्म ' while in the धर्मसूत्रs it covers the whole sphere of 'sacred laws' of which performance

of sacrifice is only a part. Cf. the definition of धर्म in the वसिष्ठधर्मसूत्र:– श्रुतिस्मृतिविहितो धर्मः । तदलाभे शिष्टाचारः प्रमाणम् ।

द्वादशलक्षणी= द्वादशविषयां (लक्षणं=विषय) Cf न्यायकोश – लक्षणं प्रतिपाद्यो विषयः । यथा जैमिनिर्द्वादशलक्षणीं प्रणिनाय इत्यादौ । Some take लक्षण to mean a chapter. सूत्रयामास= सूत्रेण प्रतिपादितवान् Cf the definition of सूत्रः–स्वल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ [ मध्वभाष्य ] सारवत्= Substantial, containing essence. विश्वतोमुखं:– of universal application. अस्तोभं:– without redundant words

अथातो धर्मजिज्ञासा This is the opening सूत्र of the धर्मसूत्रs also. But as said above, the spheres of धर्म in the धर्मसूत्रs and the पूर्वमीमांसा differ. अत्र= In the सूत्र 'अथातो' etc. वेदानन्तर्यवचन what is meant is this. The word अथ in the सूत्र in question shows that immediately ( आनन्तर्य ) on completing the study of the Vedas the Student is to undertake an enquiry into धर्म for which the पूर्वमीमांसा is useful. अतः... वृत्तेः–The study of the Vedas is to be prosecuted for a seen purpose viz. an understanding of the sense of the Vedas. In other words, when a student is asked to study the Vedas, it naturally follows that he has to study them with the ulterior purpose of preparing the ground for understanding their sense. Mere recitation without अर्थज्ञान is of no avail and hence is not अध्ययन. Note यास्क's remarks: स्थाणुरयं भारहारः किलाभूत् । अधीत्य वेदं न विजानाति योऽर्थम् । अध्ययन must result in अर्थज्ञान, hence the propriety of undertaking धर्मजिज्ञासा, immediately after वेदाध्ययन, धर्म being the अर्थ of the Vedas [ Note how the मीमांसकs hold that in धर्म is to be found the quintessence of the Vedas ] So the sense of the Sūtra is 'After the study of the Veda is completed, because such study results into अर्थज्ञान, one should investigate धर्म.'

P. 3 स्वाध्यायः lit. muttering to oneself: The study of the Vedas cf स्वाध्यायो जप इत्युक्तो वेदाध्ययनकर्मणि । स्वाध्यायोऽध्येतव्यः E

from शतपथब्रा. XI-5-7 1-10 विधि Injunction which is marked by the potential ( अध्येतव्य ) अर्थज्ञानरूपदृष्टार्थकत्वेन व्यवस्थापनात् The idea is -It is possible for an objector to argue that mere repetition of the Veda is what is enjoined by the विधि, स्वाध्यायोऽध्येतव्य । If anybody asked the objector what purpose is served by such repetition without understanding the meaning, the objector might answer that the student lays in store so much merit (Unseen) by the study This argument of the objector is set aside on the plea that the purpose viz. merit which is assured acc to his reasoning is something unseen ( अदृष्ट ) It will be decidedly better to admit the seen purpose viz अर्थज्ञान as having been intended by the विधि than to rely upon something unseen as its purpose For the rule is

लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना ।

When a seen purpose can be advanced why depend upon an unseen ? When we can say that अध्ययन is meant for अर्थज्ञान, why argue that अध्ययन is meant for पुण्य and do away with the necessity of अर्थज्ञान ?

धर्मस्य वेदार्थस्य -Note how the मीमांसकs hold धर्म to be the essence of the Vedas

जिज्ञासा... लक्षणा -लक्षणा is the power of implication, one of the three (acc to the तार्किक, two) powers that a word possesses, the other two being अभिधा and व्यञ्जना When we cannot get a coherent sense from the literal sense of a word (अभिधा) we have to resort to लक्षणा. Thus in a sentence like गङ्गायां घोषः (a hamlet) to bring out a coherent sense we must interpret गङ्गा to mean गङ्गातीर, though literally गङ्गा means the गङ्गाप्रवाह Here गङ्गा is said to mean गङ्गातीर by लक्षणा Similarly, in the sentence जिज्ञासा कर्तव्या, जिज्ञासा is to be taken to mean विचार जिज्ञासा is ज्ञातुमिच्छा, and इच्छा is spontaneous and

not effected ( कर्तव्या ) Therefore जिज्ञासा कर्तव्या does not yield a coherent sense if we were to stick to the literal sense or primary significance of the term जिज्ञासा, to effect इच्छा being unnatural So by लक्षणा, जिज्ञासा is to be taken to imply विचार

( 2 )

P 4 लक्षण Definition यागादिरेव आदि includes such holy observances as जप which also are प्रयोजनवत् and वेदप्रतिपाद्य एव excludes quasi religious acts like worship of trees, which are not वेदप्रतिपादित वेदप्रतिपाद्य -वेद includes the संहिता॰, the ब्राह्मण॰ and the उपनिषद्॰ The मीमांसक is particularly concerned with the ब्राह्मण॰ that teach the cult of sacrifice Read शबर's view on धर्म -य एव श्रेयस्कर स एव धर्मशब्देनोच्यते । कथम वगम्यताम् । यो हि यागमनुतिष्ठति त धार्मिक इति समाचक्षते तेन य पुरुष नि श्रेयसेन सयुनक्ति स धर्मशब्देनोच्यते । न केवल लोक वेदेऽपि यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमा यासन्निति यजतिशब्दवाच्यमेव धर्म समामनन्ति ।

प्रयोजनेऽतिव्याप्तिवारणाय etc If the word प्रयोजनवत् were eliminated the definition will be वेदप्रतिपाद्य अर्थ धर्म This definition would comprehend प्रयोजन॰ like स्वर्ग ( Cf ज्योतिष्टो मेन स्वर्गकामोयजेत ) which are वेदप्रतिपाद्य and अर्थ (an auspicious thing ) but are not धर्म For, to take the stock instance, ज्योतिष्टोम is धर्म, but स्वर्ग, the प्रयोजन is not धर्म ज्योतिष्टोम is स्वर्गप्रयोजनवत् स्वर्ग is not प्रयोजनवत् being itself the प्रयोजन

भोजनादौ वेदप्रतिपाद्य इति If the epithet वेदप्रतिपाद्य were not used, धर्म will amount to प्रयोजनवत् अर्थ Then worldly acts like भोजन which have प्रयोजन like क्षुन्निवृत्ति and which are not evil ( अर्थ ) will be included in the definition But they are not धर्म, for a धर्म must be वेदप्रतिपाद्य also While भोजन etc are not वेदप्रतिपाद्य but रागप्राप्त, voluntary अनर्थफल कत्वादनर्थभूते अर्थे इति —If we were to drop the word अर्थ from the definition धर्म will be वेदप्रतिपाद्य प्रयोजनवान् This will bring calamitous rites like श्येन, which lead their

performer to hell, within the scope of the definition. Rites like श्येन are वेदप्रतिपाद्य ( Cf श्येनेनाभिचर यजेत ) and प्रयोजनवत् ( the प्रयोजन of श्येन being अभिचार =शत्रुवध ) but are not धर्म because they are अनर्थभूत [ अर्थ्यते फलजनकत्वेन प्रार्थ्यते इति अर्थ ] For श्येन and such inauspicious rites lead their performer to नरक Cf The commentary श्येनफलस्य शत्रुवधस्य नरकजनकत्वेनानर्थत्वाच्छ्येनोऽपि तद्द्वारा अनर्थ एव । Read how the मीमांसापरिभाषा accounts for the insertion of the श्येन in the Veda – वेदे श्येनस्याभिचारो वेदविहितो न भवति फलत्वात् । फलं न विधेयम् । किन्तु फलमुद्दिश्य तत्साधन इन कर्मैव विधेयमिति सिद्धान्तात् ।

श्येन – An imprecatory rite intended for अभिचार i e शत्रुवध.

P 5 नच धर्मप्रतिपादकत्वात् The question at issue is whether the definition of धर्म as वेदप्रतिपाद्यो प्रयोजनवत् अर्थे धर्म is substantially the same as the standard definition of धर्म given by the मीमांसाकार, जैमिनि who defines it as चोदनालक्षण अर्थे धर्म In other words, is वेदप्रतिपाद्य the same as चोदनालक्षण ? Is the वेद exclusively चोदनात्मक ?

The objector's standpoint is this He says चोदना (which means विधि like ज्योतिष्टोमेन स्वर्गकामो यजेत ) does not constitute the whole of the Veda The Veda contains besides मन्त्र नामधेय निषेध & अर्थवाद Thus चोदना is only *a part of the Veda* ( वेदैकदेश ) Thus when जैमिनि defined धर्म as चोदनालक्षण he decribed it as something embodied in a *part only* of the Veda and not the whole of it, while you define it as वेदप्रतिपाद्य which amounts to saying that it is embodied in the *whole* of the Veda. Thus while जैमिनि's definition embraces चोदना *only*, *yours comprehends* मन्त्र, नामधेय etc besides चोदना Thus your definition is substantially defferent from the standard definition of जैमिनि This objection is refuted by लौ भा by pointing out that the word चोदना in the सूत्र of जै is not to be taken in a limited sense It comprehends, says लौ भा, not only

चोदना but the other portions too viz मंत्र अर्थवाद, etc; because, all these portions are as much धर्मप्रतिपादक as the चोदना portions. मंत्र, अर्थवाद etc. are धर्मप्रतिपादक because they are *subservient to* चोदना. How they are subservient to चोदना is proved in the respective sections. Thus the definition वेदप्रतिपाद्यः धर्मः is the same as चोदनालक्षणो धर्मः चोदनालक्षणः धर्मः ( जै. सू. ) चोदना is विधि. Cf. चोदना चोपदेशश्च विधिश्चैकार्थवादिनः । सौत्रतल्लक्षणविरोध· Dissolve: सौत्र ( स्फ़ास्य ) तल्लक्षणस्य च विरोधः सौत्रलक्षणः— The definition in the सूत्र, चोदनालक्षणो धर्मः तल्लक्षण : The definition वेदप्रतिपाद्य· धर्मः चोदना ..परत्वात् वेद includes besides चोदना, मंत्र, नामधेय, निषेध, अर्थवाद तत्रापि=जैमिनिसूत्रेऽपि.

वेदमात्रपरत्वात्—Signifies the whole वेद. The word चोदना as used in the सूत्र of जैमिनि signifies चोदना and also मंत्र, नामधेय, निषेध & अर्थवाद. जैमिनि wants to define धर्म He cannot do so by confining his definition to चोदना because मंत्र etc are also धर्मप्रतिपादक and as such must be included in the definition. Thus चोदना, मंत्र etc which *collectively* form the वेद are धर्मप्रतिपादक. सोमदेव out of deference for the वेदान्त whose claims will be ignored acc to this interpretation remarks चोदनाप्रकरणपुरस्सरेणवेदपरत्वादित्यर्थ । तेन न ब्रह्ममीमांसाविरोध ।

वेदस्य...धर्मप्रतिपादकत्वात्—Even मंत्र, अर्थवाद etc. are subservient to विधि and are hence धर्मप्रतिपादक., चोदना being धर्मप्रतिपादक acc. to all. See the Sections on अर्थवाद etc. where their subservience to धर्म is proved

( 3 )

P. 7 Here is explained how Vedic Injunctions make us perform धर्म through the two भावनाs present in the Potential. प्रत्यय —Suffix त in यजेत. आख्यातत्व— The element that gives us the notion that a particular thing is or was or will be *effected* ( विधेयत्वेन बोधन ) or that a particular thing did or does or will exist. This is to be distinguished from the radical

element which is यज् in the instance on hand. The radical element varies with each root while this आख्यात element does not vary with the roots but is constant e. g. In the forms स्नायात् and यजेत the radical elements are different viz. स्ना and यज् but the आख्यात element viz. कुर्यात् is the same in both, स्नानं कुर्यात् and याग कुर्यात्. In brief, आख्यात element points to the कार्यत्व or भव्यत्व underlying all verbs. The word आख्यात dates as far back as यास्क who gives it is as one of the four grammatical divisions of words. आख्यात means 'a verb' in यास्क लिङ्त्व The element that points to the potential mood (of the verb) आख्यातत्व दशलकारसाधारणं —आख्यातत्व is an element that is common to all moods and tenses. There is no tense or mood that does not describe the भव्यत्व or कार्यत्व of the root qualified by it.

| | | | | | |
|---|---|---|---|---|---|
| दशलकार. | लट् | Present | } | लुङ् | Aorist |
| | लिट् | Perfect | | लृङ् | Conditional |
| | लुट् | First Future | | | |
| | लृट् | Second Future | | | |
| | लेट् | Subjunctive | | | |
| | लोट् | Imperative | | | |
| | लङ् | Imperfect. | | | |
| | लिङ् | Potential | | | |

लिङ्त्व—मात्रे: The element that points to the potential is present *only* in the potential mood. while आख्यात element is present in *all* moods and tenses उभाभ्यामप्यशाभ्यां i. e. आख्यात and लिङ् elements of the प्रत्यय.

[1] It should be noted that, according the मीमांसक, in a sentence it is the suffix of the verb (प्रत्यय) that is most important in determining the sense of the sentence. That is why they are described as प्रत्ययार्थमुख्यविशेष्यकशाब्दबोधवादिन as distinct from the वैयाकरणs who are धात्वर्थमुख्यविशेष्यकशाब्दबोधवादिन (i. e who assign importance to the root of the verb in a sentence) and the नैयायिक who are कर्तृमुख्यविशेष्यकशाब्दबोधवादिन (i e. who assign importance to the

subject in a sentence) Thus to illustrate if we took the sentence देवदत्त पचति, according to the मीमांसक, it is the प्रत्यय, ति, in पचति which is the most important part of the sentence Acc to the वैयाकरणs it is the root पच् while the नैयायिकs say that it is देवदत्त , the subject.

That is why the मीमांसक enters upon a discussion of the लिङ्प्रत्यय in विधिs To him it is the most important part in a विधि In the injuction यजेत स्वर्गकाम the creative power possessed by the words in the Veda to make a person inclined ( प्रवृत्त ) to perform sacrifice is शाब्दीभावना or Verbal Creativity because it is possessed by the words which are the भावयितृ and secondly, it is what induces the production (भवन) of the प्रवृत्ति ( भवित ) of the person

The creative energy with purpose ( आर्थीभावना ), or Purposive creativity consists in the inclination to perform sacrifice in all its details, which is conducive to the production of स्वर्ग and hence can be described as भवितृ ( स्वर्गस्य ) भवनानुकूल भावयितु ( यागकर्तु ) व्यापार विशेष । Thus शाब्दीभावना rests in *words* while the आर्थीभावना rests in the *person*.

(4)

P 8 पुरुषप्रवृत्त्यनुकूल —when a गुरु orders his शिष्य with the words ' गामानय ', there is भावना abiding in the गुरु which makes the शिष्य undertake गवानयन, in other words makes him प्रवृत्त for गव नयन the भावयितृ in this case is the गुरु The भवितृ is the प्रवृत्ति This भावना is the same as प्रेरणा which is the cause of the प्रवृत्ति which latter is otherwise termed आर्थी भावना.

P 9 यद्यस्मात् etc This general rule is given to ear out the statement सा च लिङ्शेनोच्यते गोशब्दस्य गोत्वम्—It should be noted that the मीमांसकs are केवलजातिवादिनs that

is those who hold that a word expresses the *genus* of a thing: as against these the नैयायिकs and बौद्धs are केवलव्यक्तिवादिन्s and जातिविशिष्टव्यक्तिवादिन्s respectively. Thus the import of the word गो is गोत्वजाति acc. to the मीमांसकs, गोव्यक्ति acc. to the नैयायिकs and गोत्वविशिष्टव्यक्ति acc. to the बौद्धs.

पुरुषनिष्ठः अभिप्रायविशेष Thus in the instance of गवानयन cited above, the अभिप्राय of the गुरु i. e. his intention that the शिष्य should bring the cow is the भावना that corresponds to the शाब्दीभावना of the Vedic Sentences. A Vedic Sentence which is a शब्द—like यजेत स्वर्गकामः—does the same function with regard to the प्रवृत्ति of the स्वर्गकाम, as the words of the गुरु with regard to the शिष्य's प्रवृत्ति.

वैदिकवाक्ये तु पुरुषाभावात्: Because the मीमांसक holds that the वेद is अपौरुषेय, not the work of a person, not even god.

P. 10. सा च भावना etc. Because भावना is a व्यापारविशेष, it requires, as all व्यापारs do, साध्य, साधन and इतिकर्तव्यता. To take an instance, परशुव्यापार requires a साध्य viz. the छिदिक्रिया (cutting of the tree), a साधन viz the परशु and an इतिकर्तव्यता viz. the whole process preceding cutting, consisting in the raising and lowering of the axe. तत्र साध्याकाङ्क्षायां etc. the meaning is that the साध्य of शाब्दीभावना is the आर्थीभावना i. e. प्रवृत्ति which also has साध्य, साधन and इतिकर्तव्यता of its own.

The following scheme will make clear the भावना theory of the मीमांसकs



एकप्रत्ययगम्यत्वेन...श्रुतेः—The sentence is a reply to a possible objection against taking आर्थीभावना as the साध्य of शाब्दीभावना. To develop the argument an objector might argue. why should you particularly take आर्थीभावना expressed by the आख्यातांश of the प्रत्यय as the साध्य of the शाब्दीभावना when you can as well choose the धात्वर्थ as the साध्य ? Thus in the instance of यजेत, why should you take the आख्यात element in the प्रत्यय as the साध्य when you can take याग ( rt. यज् ) as the साध्य ? In other words, why do you admit the intermediate step of प्रवृत्ति (expressed by the आख्यातांश) instead of straightway admitting याग the final outcome itself as the साध्य ?

The मीमांसक replies by pointing out that याग and आख्यातांशोक्त भावना (the प्रवृत्ति ) can be both साध्यs, no doubt. But we must bear in mind that the साध्य, viz. आख्यातांशोक्त-भावना is nearer the लिङ्श of which it is साध्य than the धात्वर्थ. For आख्यातांश is comprised in the same प्रत्यय ( प्रत्यय= आख्यातांश+ लिङ्श ) while the धात्वर्थ is a different unit from the प्रत्यय and as such further removed from the लिङ्श than the आख्यातांश When different elements are comprised in the same प्रत्यय there is found what is technically called समानाभिधान श्रुति the same as एकाभिधानश्रुति or Common-Element Text. This is to be preferred to एकपदश्रुति that would result from construing the लिङ्श with the धात्वर्थ .

संख्यादीनां...न साध्यत्वेनान्वय = Here is an answer to a possible suggestion that number, tense etc. inasmuch as they are elements present in the प्रत्यय त, are as much entitled to be the साध्य of the शाब्दीभावना as the आख्यातांश. The मीमांसक replies saying that though they are elements of the प्रत्यय, still they are quite incapable of being साध्यs. For, काल and वचन cannot be given as replies to the question किं भावयेत Nobody can say काल भावयेत् etc They are mere conditions of the आख्यातांश and no more But the आख्यातांशोक्त आर्थीभावना can well be the साध्य

लिङादिज्ञान आदि includes suffixes of other tenses and moods ज्ञान as soon as we *apprehend* the Potential we proceed to do the thing enjoined upon us

साधनाकाङ्क्षाया अन्वेति The energy ( प्रेरणा in the case of शाब्दीभावना ) works out its effect viz प्रवृत्ति through the use of the Potential, just as the Imperative in गामानय makes देवदत्त प्रवृत्त for गवानयन

P 11 तस्य च करणत्व . सत्त्वात् The apprehension of लिङ् etc serves as the करण in the production of आर्थीभावना ( i e प्रवृत्ति ) by informing us ( ज्ञापक ) of the शाब्दीभावना ( viz प्रेरणा ) which is already there just as the Imperative आनय in गामानय becomes the करण of the गवानयनप्रवृत्ति of the शिष्य, only by indicating the प्रेरणा which is already present in the गुरु The शब्द i e the Veda, in the present instance is already keen about our performing the sacrifice and it evinces its keenness by the use of the Potential The *knowledge* of the Potential urges us on to perform sacrifices Thus लिङादिज्ञान becomes the करण of the आर्थी भावना ( प्रवृत्ति ) by making us aware of the शाब्दीभावना

P 12 किंतु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्तकत्वेन वा, Thus लिङादिज्ञान is ज्ञापककरण of शाब्दीभावना but कारक (the same as निर्वर्तक ) करण with regard to आर्थीभावना which is the effect ( भाव्य ) of the शाब्दीभावना

It may be pointed out that the question of लिङादिज्ञान being the ज्ञापककरण of शाब्दीभावना is quite out of place For, we are to discuss the करण not with regard to the शाब्दीभावना the cause, but with regard to the आर्थी भावना, the effect For, at the very outset करण has been explained as answering the question of केन ( साध्य ) भावयेत् ( जनयत् ) In the present instance, we are not concerned with the question of the production *of* शाब्दीभावना but the production *by* शाब्दीभावना of the आर्थीभावना its साध्य And a reply to it is to be found

only in शब्दभावनाभाव्यनिर्वर्तकत्वेन लिङ्ज्ञानं करणं. Thus भावनाज्ञापकत्वेन वा is irrelevant.

The passage as it stands will give a decidedly better meaning if instead of वा the particle च were used. Then the passage would show how by becoming the ज्ञापकहेतु of the शाब्दीभावना, लिङ् becomes the कारकहेतु ( or निर्वर्तकहेतु ) of आर्थीभावना Cf. **मीमांसापरिभाषा**:–तत्र पुरुषप्रवृत्तेर्भाव्यत्वेनान्वयात्, अध्ययनावगत लिङादेः करणत्वेनान्वयात्, प्राशस्त्यज्ञानस्येतिकर्तव्यतात्वेनान्वयात् शब्दभावनाया अपि अंशत्रयवैशिष्ट्यम् अर्थभावनाया इव इष्टम्। Cf. again **आपदेवी**:–करणाकाङ्क्षायां लिङादिज्ञानं करणत्वेन सम्बध्यते। तस्य च करणत्वं न भावनोत्पादकत्वेन किन्तु भावनाभाव्यनिर्वर्तकत्वेनैव। लिङादिज्ञानं हि शब्दभावनाभाव्यार्थीभावनां निर्वर्तयति कुठार इव च्छेदनम्। अतो लिङादिज्ञानस्य करणत्वेनान्वयः।

**इतिकर्तव्यता... अन्वेति।** Here is the description of the इतिकर्तव्यता of शाब्दीभावना. To revert to the instance of the गुरु and the शिष्य, the गवानयनप्रवृत्ति of the शिष्य resulting from the गुरु's प्रेरणा is accomplished by the Imperative mood through the consciousness present in the mind of the शिष्य that the execution of his Guru's orders is calculated to prove beneficial to him in his Studentship, because the गुरु is as good as a god. ( Cf. आचार्यदेवो भव ) Corresponding to this consciousness in the शिष्य, *there is a consciousness present in the यजमान that* the action he performs is bound to result into something good for him, for, he gathers from the अर्थवाद that it has been approved. An अर्थवाद of the type वायुर्वै क्षेपिष्ठा देवता ( वायु is the quickest deity ) awakens a consciousness in the mind of the यजमान that the offering of a white animal as enjoined in the विधि ( वायव्यं श्वेतमालभेत भूतिकामः ) is प्रशस्त, approved by the Veda, which eulogises the वायु in the अर्थवाद. Thus लिङ् helped by the consciousness of the प्राशस्त्य to be gathered from the अर्थवादs results into the प्रवृत्ति

कर्तव्यस्य इति प्रकारः इतिकर्तव्यता। इतिशब्दस्य प्रकारवाचकत्वात्। कर्तव्यसामान्यस्य भेदकः कर्तव्यविशेषः एव प्राशस्त्यरूपः शब्दभावनायामितिकर्तव्यतात्वेनान्वयं लभते।
For अर्थवाद see the Section on अर्थवादs.

(5)

P 13 प्रयोजनेच्छाजनित etc when the यजमान performs the sacrifice, the प्रवृत्ति (आर्थीभावना) is a व्यापार (मानसिक) which has for its object ( विषय ) the क्रिया viz यज्ञ which is the outcome of a desire for स्वर्ग (प्रयोजन)

Dissolve प्रयोजनेच्छाजनिता क्रिया विषय यस्य, प्रयोजने. विषय चासौ व्यापारश्च क्रियाविषयव्यापार in plain words, means that the inclination ( प्रवृत्ति ) is towards the performance owing to the desire for a goal like heaven

आख्यातत्वांशान one of the two constituents of the suffix the other being लिङ्त्व आख्यातसामान्यस्य Dissolve आख्यातमेव सामान्य and not आख्यातानां सामान्य for we have seen that आख्यात element is the same for all tenses and moods आख्यात is called सामान्य for it is दशलकारसाधारण

व्यापार note that शाब्दीभावना and आर्थीभावना are both मानसिक व्यापारs आख्यातसामान्यस्य वाचित्वात् Since the आख्यात element refers to the कारितत्व (effectedness) it is वाचक of व्यापार , for कारितत्व denotes व्यापार

PP 14-15 स्वर्गादिफल साध्यत्वनान्वेति note that स्वर्ग is the साध्य and यज्ञ is the साधन प्रयाज – आज्य Libations which form part of the प्रायणीय or introductory ceremony in a Soma Sacrifice and are generally *five* in number viz समिधः, तनूनपात्, इडः बर्हिः and स्वाहाकार At animal sacrifices their number is eleven corresponding to the eleven आप्रिs.

(6)

अपौरुषेय वाक्य वेद —This is one of the most important theories of the मीमांसकs ( See Introd )

(7)

तत्र —प्रमाणेषु मध्ये अज्ञातार्थज्ञापक conveying something that is not conveyed by any other means of proof To take the instance of अग्निहोत्र we learn about it only from the विधि, अग्निहोत्रं जुहुयात् स्वर्गकाम . No other प्रमाण, प्रत्यक्ष,

अनुमान, उपमान or अर्थापत्ति could have given us any idea of the existence and performance of अग्निहोत्र. It is only this विधि which is by the by a sub-division of शब्द that enlightens us about अग्निहोत्र.

स च तादृशप्रयोजन etc. The wording is a clumsy imitation of आपदेवी which reads: तत्र विधिः प्रयोजनवदर्थविधानेन अर्थवान्। स चाप्राप्तमर्थं विधत्ते। etc. Construe as रामेश्वरभिक्षु directs: स विधि यादृश प्रमाणान्तरेण अप्राप्तं भवति तादृशमर्थं विधत्ते। तेन च अज्ञातप्रयोजनवदर्थविधानेन अर्थवान्।

तादृशप्रयोजनवदर्थविधानेन etc The emphasis is on प्रमाणान्तरेण अप्राप्त If विधि had laid down something that was प्रमाणान्तरेणप्राप्त it would have become superfluous and as such निरर्थक But because the विधि lays down something beyond the scope of other प्रमाणs it becomes अर्थवान् (useful).

This विधि is called प्रधानविधि to distinguish it from गुणविधि and विशिष्टविधि

प्रमाणान्तरेणाप्राप्त – The मीमांसकs admit the following प्रमाणs or legitimate means of knowledge, (1) प्रत्यक्ष or Sense Perception. (2) अनुमान or Inference (3) उपमान or Knowledge by Comparison. (4) शब्द or Verbal Authority (5) अर्थापत्ति or Presumption The school of कुमारिल admitted besides अनुपलब्धि, the प्रमाण for comprehending अभाव Read षड्दर्शनसमुच्चय: प्रत्यक्षमनुमानं च शब्दोपमया सह। अर्थापत्तिरभावश्च षड् प्रमाणानि जैमिनेः॥

अग्निहोत्र Read शब्दकल्पद्रुम – अग्नये होत्रमत्र इति बहुव्रीहिः। यज्ञविशेषः। श्रुतिविहितम्। मासमात्रं यावज्जीवनसाध्यं च। द्वितीये विशेषोऽयम्। तस्मी यावज्जीव प्रत्यहं प्रातः सायं हवनम्। तदग्निना कर्मकर्तुर्दाहश्च। इति स्मृतिः। तत्र क्रमो यथा। ब्राह्मणक्षत्रियवैश्यानां कृतदारपरिग्रहाणां काणत्वान्धत्वबधिरत्वपङ्गुत्वादिदोषरहितानां वर्णक्रमेण वसन्तग्रीष्मशरत्सु अग्न्याधानं विहितम्। अग्नयस्त्रय। गार्हपत्य दक्षिणाग्नि. आहवनीयः। एतासामग्नीनामग्न्यागारे स्थापनम्। तेष्वग्निषु सायंकाले प्रातःकाले च अग्निहोत्रहोम. कर्तव्य.। तत्र द्रव्याणि दश। ( 1 ) पय ( 2 ) दधि ( 3 ) यवागूः ( 4 ) घृतं ( 5 ) ओदनं ( 6 ) तण्डुल. ( 7 ) सोमरस; ( 8 ) मांसम् ( 9 ) तैलम् ( 10 ) माष:

